निरमायिषत तस्यास्य मन्थाख्यस्य तात्पर्यचन्द्रिकाग्रन्थस्य अनवधानप्राप्तता दुर्मिलता चालोचयतामनेकेषां द्वैतिनामितरमतीयानां च महाशयानां सूचनामङ्गीकृत्य एतद्राजकीयमान्यकोशाध्यक्षाधिकारिभिः श्रीमद्ब्रह्मसूत्रभाष्य-तत्त्वप्रकाशिका-तात्पर्यचन्द्रिका-प्रकाशानां बहुकोशसाहाय्येन संशोध्य मुद्रणमुपक्रान्तम् ॥

तत्र भाष्यकाराणां श्रीमदानन्दतीर्थभगवत्पादाचार्याणां टीकाकृतां श्रीजयतीर्थपूज्यपादानां च चरित्रादिकं सुप्रसिद्धं, श्रीमध्वविजयजयतीर्थविजयादिभ्यः प्रचारवद्भ्यो ग्रन्थेभ्यः सुबोधं चेति, तात्पर्यचन्द्रिकाप्रकाशकृतोः श्रीमद्व्यासतीर्थराघवेन्द्रतीर्थपूज्यचरणयोश्चरितादिकं संग्रहेणात्र निरूप्यते ॥

इतस्सवत्सरत्रिशत्याः प्राक् द्वौ धनानपत्यौ द्विजदम्पती तीर्थयात्रापरायणौ कर्णाटदेशमाजग्मतुः. एकदा पतिर्मृतइव निश्चेष्टोऽभवत्. तं मृतं निश्चित्य तत्पत्नी तदनुगमनाय महतामाग्रहादित्सन्ती तदा श्रीमदानन्दतीर्थभगवत्पादीयवेदान्तसाम्राज्यपदमागिनिश्चत्त तत्रभवतः श्रीमद्ब्रह्मण्यतीर्थपूज्यपादान् यदा ववन्दे, तदैव तन्मुनिवदनात् 'पुत्रवती भव' इति वाणी निरयात्. तदनु सा निजपतेस्तादवस्थ्यं विज्ञाप्यापि 'त्वद्भर्ता जीवत्यस्ति, तत्राद्य पुत्रस्सपदि अस्मभ्यमभ्यर्पणीय' इति प्रत्यभाष्यत यतितिलकैः. तथैव तया प्रसूतं प्रथमशिशुं यतिकुलतिलकनिदेशानुवर्तिभिः पुरुषैर्भूस्पर्शमन्तरेणैव सौवर्णभाजने परिगृह्य मठमनायि, समवर्ध्यत च श्रीहरिसमर्पितदुग्धपूरेण, समस्कारि च यथावत् तत्तद्वयसि, सप्ताब्दापि च वराश्रमोऽरम्भे, समर्प्यत चास्मै विद्याभ्यासाय श्रीमच्छ्रीपादराजापरनामभ्यः श्रीमल्लक्ष्मीनारायणतीर्थाभिधयतिपतिभ्यः, यदुपदिष्टविद्याबलेन तादात्विकानेकदुर्वादिविजयेन विद्वज्जीवातुभूतानेकग्रन्थरचनेन च सफलयन् अयं महार्घकीर्तिसम्पन्नः संवृत्तः ॥

श्रीमद्वेङ्कटाचलक्षेत्रे श्रीश्रीनिवासस्य पूजां महाजनैरौ[illegible] वत्सरानकार्षीत्. तल्लक्षणतया अधुनाऽप्येतन्माठाधिपतीनां वेङ्कटाचलप्राप्ति-समये अनितरसाधारणी मर्यादा अनुवर्तते. किञ्चास्य दिगन्तविततवादि-द्वयादिविजयपाण्डित्याद्यतिशयाः श्रीमद्वादिराजतीर्थविजयीन्द्रतीर्थप्रभृतयो महा-नुभावाअपि शिष्यास्समभूवन्निति, अद्याप्येतदीयग्रन्थाध्यायिनएव जनाः पाण्डितीपरमकाष्ठात्वमश्नुवत इति चानन्यसाधारणोऽस्य विद्याविभवः. अपि च श्रीमदानन्दतीर्थभगवत्पादेभ्य आरभ्य अस्मात्पूर्वमनन्तर चानेकैर्महत्त-मैरधिष्ठितस्याप्येतदधिष्ठितमठोत्तंसस्य भरतखण्डस्य भक्तनाम्नैव एतन्नाम्ना घटितएव प्रतायते 'श्रीमद्व्यासराजमठ.' इति व्यवहारः स्थेमानमापन्नः. किं च तादात्विकस्य तुंगातीरविराजमानगजगह्वर (आनेगोंदि) पुराधि-राजस्याचिरसमापतत्कुहूयोगभयेन निजराज्यमन्यायत्तं चिकीर्षोः तात्कालि-कसमयानुसारेण हस्तिहस्तार्पितमालिकायां हस्तिना एतत्गलेऽर्पितायां महाजनानामर्थनया कं चिदेनेहसं राज्यमयमधीतिष्ठन्वितताार बहूनि भूम-भूतीनि नैकेभ्यो विप्रवरेभ्यः. उपलभ्यन्ते चाधुनापि तदीयानि दानशा-सनानि तत्रतत्र. तेषु श्रीमत. कृष्णराजमहाराजात् हाडुगल्लदेशे वंकापुरवेण्ठये स्थितं व्यासपुरापरनामकं गौरापुरग्रामं प्रतिगृह्य तेनैव राज्ञा तद्ग्रामे वृत्तिवि-भागं कारयित्वा मदीयश्रीरामचन्द्राय वृत्तिपञ्चकं निधायान्याः वृत्तीः ब्राह्म-णेभ्यः प्रादादिति प्रतिपादयदेकं ताम्रशासनं श्रीमद्वैसुमहाशयप्रकाशितेषु शिवमोग्गादेशशासनेषु पञ्चाशीतितमं शासनं सर्वेषां सुलभमस्ति.

तत्रादौ चन्द्रवंशप्रभवं श्रीमत्कृष्णराजमहाराजं कैश्चन श्लोकैः प्रस्तु-त्य दानकालसम्प्रदानादिनिर्देश एवं कृत.—

शकाब्दे शालिवाहस्य सहस्रेण चतुश्शतै ।
नवाभ्यधिकया चत्वारिंशता गणिते क्रमात् ॥

सर्वजिन्नामके वर्षे मासि कार्तिकनामनि ।
शुक्लपक्षे च पुण्यायामुत्थानद्वादशीतिथौ ॥
तुङ्गभद्रानदातीरे स्वङ्कस्थश्रीरमापते ।
सन्निधौ विठ्ठलस्य सर्वसम्पद्विधायिनि ॥
श्रीमत्परमहंसाख्यपरिव्राज महात्मने ।
मध्वाचार्यमताम्भोजमार्ताण्डायिततेजसे ॥
ब्रह्मण्यतीर्थशिष्याय ब्रह्मनिर्मलमूर्तये ।
व्यासतीर्थयतीन्द्राय विद्वदिन्दीवरेन्दवे ॥
नरसापुरमहाग्रामेनगण्डे विहितस्थितिम् ।
श्रीमद्व्यासपुराभिख्यामपरां समुपाश्रितम् ॥
गौरापुराभिधं ग्रामं सर्वैरास्योपशोभितम् ।
कृष्णरायमहारायो माननीयो मनस्विना ।
सहिरण्यपयोधारापूर्वकं दत्तवान्मुदा ॥

इत्यादिना । तदेतच्छासनबलेनास्य यतिपुङ्गवस्य जीवितकालः शालिवाहनशकवत्सराणां पञ्चदशशतान्तर्वर्तीति निर्णयोऽपि लभ्यत इत्यलम् ॥

एतत्पित्रोर्जन्मभूमि हैदराबाद्देशान्तर्गतमानवीनीजदन्तर्गणित कोट्टनकल्लुनामा ग्रामइति वदन्ति ॥

अथ श्रीमद्राघवेन्द्रतीर्थश्रीचरणानां अभिजनदेश आन्ध्रदेशान्तर्गतं विजयनगरम् श्रीमती गोपिकाम्बा श्रीमद्वेङ्कटाचलेशितुः प्रसादेनामुं प्रासूत श्रीमद्वेणीवेङ्कटभट्टनामकोऽसौ श्रीमतीं सरस्वत्यम्बाभिधां परिणीय तस्यां श्रीलक्ष्मीनारायणाख्यं तनयमजनयत्, यश्च श्रीमदणुभाष्यटीकाविवरणादिना प्रथमानमश्नुते भुवने तदनन्तरं गुरुवर्य श्रीमत्सुधीन्द्रतीर्थश्रीचरणेभ्योऽधीतविद्यः परिगृहीतपारिव्राज्यश्च तत्रतत्रानेकान् दुर्वादिनो विजित्य नैकानतिप्रौढान्मन्दोपकारकांश्च ग्रन्थाननन्यसुकरान्विरचय्य समार्जितातिवि

शदयशा अद्यापि निजवृन्दावनसेविनां समीहितपूरणादिना सुस्पष्टमहिमा विराजतेतराम्. एतदीयानि चरितानि सुबहूनीति अत्र तत्सर्वसंग्रहो दुष्करइति विरम्यते. एतदुपज्ञस्य चन्द्रिकाव्याख्यानस्य प्रकाशइत्यभिधा.

अत्र सम्मुद्र्यमाणानां भाष्यादीनां विशेषः किञ्चिदुपवर्ण्यते. भाष्ये तावत्सूत्रार्थवर्णनं सूत्रानुकारिभिरन्यूनानतिरिक्तैः पदैः क्रियते. अनन्तरं स्वोक्तार्थः श्रुत्युदाहरणेन दृढीक्रियते. तथोदाहृतश्रुत्यर्थोऽपि इतिहासपुराणादिवचनैः युक्त्या च स्फुटीक्रियते. न किमप्यनुपयुक्तमप्रामाणिकं च स्वकपोलकल्पितं वर्णयित्वा ग्रन्थविस्तृतिः क्रियतइत्ययमतिशयोऽस्य तद्विवेचनवतां सुविदितस्सम्प्रगुपश्लोकितश्च श्रीमति मध्वविजये—

उक्तमुक्तमभिधेयमुत्तमं वेदवास्य मनुवादयन्मुहुः ।
व्यञ्जयत्स्मृतिवचोभिरञ्जसा तस्य चार्थमतियुक्तयुक्तिमत् ॥
बालसह्यमपि बोधयद्गुरुं दुर्निरूपवचनं च पण्डितैः ।
अप्रमेयहृदयं प्रसादवत् सौम्यकान्ति च विपक्षभीषणम् ॥

इत्यादिना. बालदृष्ट्या सुबोधार्थत्वेऽपि पण्डितदुर्निरूपहृदयत्वाद्गाम्भीर्यादिगुणयुक्तं चेदमिति यथोक्तभाष्यलक्षणसम्पत्तिरत्र सुविशदा,

सूत्रार्थो वर्ण्यते यत्र पदैस्सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥ इति.

भाष्यस्य प्राचीनटीकान्तरसत्त्वेपि सङ्गतिसंशयपूर्वपक्षादिसहिताधिकरणशरीरस्य कार्त्स्न्येन सुबोधशैल्या निरूपणं भाष्यगताशेषव्याख्येयांशव्याख्यानं, भाष्यातिरिक्तमूलान्तराणामपि कया चन सङ्गत्या अर्थवर्णनं चात्र नातिविस्तृतग्रन्थेन क्रियतइति सर्वजनीनत्वान्मुमुद्रयिषितचन्द्रिकाव्याख्येयत्वाच्च तत्त्वप्रकाशिकैवात्र सङ्कलिता.

चन्द्रिकाया तु "इमां व्याकरिष्ये यथामति" इति प्रतिज्ञानुरोधेन तत्त्वप्रकाशिकाव्याख्यानं मूलटीकान्तरप्रतिपादितास्पष्टार्थस्फुटीकरणं च

क्रियते. पर तु टीकाव्याख्यान न सर्वत्र प्रतिवाक्यग्रहणपूर्वं क्रियते. केवल प्रथमाधिकरणमात्रे कतिपयग्रन्थपर्यन्तमेव तथा विवरण क्रियते. उपन्यासरूपेणैव प्रायस्सर्वटीकार्थनिरूपण पूर्वपक्षसिद्धान्तप्रमेयादीनामविशेषेण सुबोधत्वाय क्रियते. यथोक्त ग्रन्थकृद्भिरेव—

उपन्यासमुखेनैव टीकार्थोऽपि निरूप्यते ।
पूर्वपक्षादिमेयानामविक्षिप्तत्वसिद्धये ॥

इति. अवदयव्याख्येयटीकावाक्यानामक्षरार्थस्तु प्रायस्तत्तदधिकरणान्ते सग्रहेण उच्यते द्वितीयाध्याये तु तत्रतत्रैव टीकाक्षरार्थवर्णनमुपन्यासश्च सक्षिप्य क्रियतइतीद व्याख्यानवैचित्र्यमेतद्ग्रन्थस्य.

प्रतिज्ञाता परपक्षपरीक्षा तु जिज्ञासाधिकरण एव स्वरीत्या अधिकरणारम्भात्प्राक् कृता. अनन्तराधिकरणेषु तु स्वपक्ष निरूप्यैव 'अन्ये तु, परे तु' इत्यादिनिर्देशपूर्वमद्वैतिपक्ष 'केचित्' इति निर्देशेन विशिष्टाद्वैतिपक्ष चानूद्य क्रियते अय ग्रन्थो द्वितीयाध्यायसमाप्तिपर्यन्तमेव विरचित . तदुत्तराध्यायद्वय स्थानेनैव क्रमेण व्याख्यानसमापन तु तन्मठपरम्परायां श्रीमद्व्यासतीर्थश्रीमच्चरणेभ्यो दशमै "दशमो मत्सम ' इति तेषामेव वचनेनादावेव समुचितानुभावैस्तत्ताद्दशै श्रीमद्रघुनाथतीर्थपूज्यचरणै व्यधायि. तद्ग्रन्थस्य शेषचन्द्रिकानाम्ना व्यवहारो वरीवर्ति.

प्रकाशे तु चन्द्रिकास्थावश्यव्याख्येयाशेषपदवाक्यार्थनिरूपण, अपेक्षितशास्त्रान्तरप्रमेयविशदीकरण, तत्रतत्र तादात्विकै पक्षान्तरानुयायिभि श्रीमदप्पय्यदीक्षितप्रभृतिभिरद्वैतिना शैवाना च पक्षमवलम्ब्योद्भाविताना स्वपक्षदोषाणा समाधान चेत्यादिक निपुणतर क्रियते, कोशाश्चास्य यथेष्ट लभ्यन्तइत्यस्यैव मुद्रणमारब्धम्.

तदेतद्भाष्यादिप्रबन्धचतुष्टयस्य प्रकाशनपूर्वभाविसशोधन एतत्कोशालयसम्बन्धीनि C 235, C 1001, C 995, B 41, सङ्ख्याङ्कितानि, गरळपुरी

(नंजिनगुड्) मठादानीतमेकं, मामकीनं चापरमिति षट् चन्द्रिकायाः, एतत्कोशालयसम्बन्धीनि C.936, C.955, C.90, सङ्ख्याङ्कितानि, गव्ळपुरी (नंजिनगुड् मठसम्बन्ध्येकं, मुळ्वागलुस्थलादानीतमेकं, मामकीनं चान्यदिति षट् प्रकाशस्य च पुस्तकानि, कानिचिद्राण्यतत्त्वप्रकाशिकापुस्तकानि चाश्रित्य समाहितमनसा मया यथामति व्यधायि. तत्रतत्रावश्यसंग्राह्यग्रन्थान्तरस्थविषयसंग्रहोऽपि मया तत्तत्पुटाधोभागे टिप्पणरूपेण निरचित., यदि के चन प्रामादिका दोषा उपलभ्येरन्, ते महद्भिः क्षम्यन्तामित्यर्थ्यते,

सज्जनानुग्रहाभिलाषी,

रायपाळ्य राघवेन्द्राचार्यः.

---

# विषयसूची.

हरिः ॐ

# श्रीमद्ब्रह्मसूत्रभाष्यं

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

श्रीजयतीर्थविरचितटीकया तत्त्वप्रकाशिकाख्यया,

श्रीव्यासतीर्थविरचित-तत्त्वप्रकाशिकातात्पर्यचन्द्रिकया,

श्रीराघवेन्द्रतीर्थविरचितेन तात्पर्यचन्द्रिकाप्रकाशेन च

समलंकृतम्.

हरिः ओम्.

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-

श्रीलक्ष्मीहयग्रीवाय नमः.

---

ब्रह्मसूत्रभाष्यम्

नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥

तत्त्वप्रकाशिका

शुद्धानन्दोरुसंविद्द्युतिबलबहुलौदार्यवीर्यादिदेहं
चिन्तासन्तापलेपोद्भवमृतिमुखराशेषदोषातिदूरम् ।
सद्भिर्वैराग्यभक्तिश्रुतिमतिनियतध्यानमज्ञानयोगा-
द्गम्यं वन्दे मुकुन्दाभिधममलमलं ब्रह्म वेदान्तवेद्यम् ॥

तात्पर्यचन्द्रिका

अस्पृष्टदोषगन्धाय कल्याणगुणसिन्धवे ।
नमोनमो भक्तमुक्तिदायिने शेषशायिने ॥

प्रकाश

समस्तगुणसम्पूर्णं सर्वदोषविवर्जितम् ।
ज्ञानिप्रियतमं वन्दे मुक्तिदं कमलापतिम् ॥
शर्वादिसर्वगीर्वाणनिर्वाणगतिहेतवः ।
पूर्णप्रज्ञपदाम्भोजपांसवः पान्तु नस्सदा ॥
विधूतदुर्मतध्वान्तो विशदीकृतपद्धतिः ।
यस्सज्जनानुज्जहार जयतीर्थरविं भजे ॥

प्रकाशः

पदवाक्यप्रमाणज्ञान् सम्प्रदायार्थकोविदान् ।
व्यासतीर्थमुनीन् सेवे दुर्वादिफणिपक्षिपान् ॥
अस्मद्देशिकपादाना प्रणम्य चरणाम्बुजम् ।
तात्पर्यचन्द्रिकाव्याख्यां विधास्यामि यथामति ॥

तत्त्वप्रकाशिकाव्याख्याव्याजेनाधिसूत्रं प्रवर्तमानेषु ग्रन्थेषु दुर्गमार्थान् सुगमान् विधित्सुर्व्यासतीर्थमुनिः प्रारिप्सितग्रन्थपरिसमाप्त्याद्यर्थं अध्यायचतुष्टयोक्तगुणविशिष्टदेवतानतिरूपं मङ्गल विदधाति—अस्पृष्टेति। असम्बद्धदोषलेशायेति द्वितीयाध्यायार्थ, "गन्धो गन्धक आमोदे सम्बन्धे लेशगर्वयो." इत्यभिधानात् । यं दोषलेशोऽपि न स्पृशति तस्मा इति यावत । बहुव्रीहेर्दोषगन्धपदान्ततेन गन्धपदान्तत्वाभावात् "अल्पाख्यायाम्" इतीत्वं न भवति । कल्याणाना 'गुणाना' धर्माणा सिन्धुरिव 'सिन्धु.' आश्रय इति आद्याध्यायार्थः । सत्त्वादीना श्रुत्यादौ गुणत्वप्रसिद्धे. मतान्तरे दु.खादीना गुणत्वेनोक्तेश्च तद्व्युदासाय—कल्याणेति । आद्यार्थस्यादौ वाच्यत्वेऽपि द्वितीयार्थ स्याद्यार्थे हेतुत्वादादावुक्ति । कल्याणधर्मत्वोपपादकत्वाद्वा, सदोषत्वे तस्यायोगात् । विघ्नादिदोषनिवृत्तेरादावपेक्षितत्वाद्वा, "न यथायथोपासते" इत्यादे । 'भक्तेभ्य ' भक्त्युपलक्षितवैराग्यश्रवणमननादिसाधनवद्भ्य· 'मुक्तिदायिने' इत्यनेन तृतीयचतुर्थयोक्ति । 'नमोनम ' इत्यादराद्विरुक्ति । "नमस्त्वास्ति" इत्यादिना चतुर्थी । एवंविधश्च नारायण इति सूचयन्ति—शेषशायिन इति ॥ प्रतिपा

चन्द्रिका

शमयन् भवसन्तापं रमयन् साधुव्रातकान् ।
कृष्णमेघः कृपादृष्टिवृष्ट्या पुष्णातु मामपि ॥
श्रीमदानन्दतीर्थार्यपादपङ्कजरेणवः ।
पवित्रयन्तु मां नित्यं पापपाटनपण्डिताः ॥
शारदावासवदनशारदाम्बुरुहान् मुहुः ।
पद्मनाभमुनीन् वन्दे सर्वशास्त्रविशारदान् ॥
मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।
जयतीर्थाख्यतरणिः भासतांमे हृदम्बरे ॥
कंसध्वंसिपदाम्भोजसंसक्तो हंसपुङ्गवः ।

प्रकाशः

इष्टदेवतां नत्वा सूत्रकर्तुः कृपादृष्टिमात्मन्याशास्ते—**शमयन्निति** । 'कृष्णमेघः' वेदव्यासाख्यमेघः 'पुष्णातु' ज्ञानभक्त्यादिभिः, भवसन्तापशान्तिविशिष्टस्वरूपानन्दानुभवलक्षणरमणदानेन वा पुष्टं करोतु । तस्य मेघत्वोपपादनं विशेषणद्वयेन । इष्टदेवतात्वाद्वसुदेवसुतः कृष्णोऽपि ग्राह्यः ॥ भाष्यकर्तुश्चादिगुरोः पादरेणुभ्यः कामान्तरं याचते—**श्रीमदिति** । कथं तेषां पवित्रीकरणशक्तिरित्यत उक्तं—**पापेति** । 'भक्तानां' इति शेषः ॥ प्राचीनटीकाकर्तॄन् नमति—**शारदेति** । सरस्वत्यावासभूतं वदनाख्यशरत्कालसम्बन्धिपङ्कजं येषां तान् । एतदुपपादयति—**सर्वेति** । गुरुत्वात् बहुवचनम् ॥ व्याख्येयग्रन्थकर्तुर्हृद्यावासं प्रार्थयते—**मिथ्येति** । तस्य तरणित्वोपपादकमेतत् ॥ यतः स्वस्य पारमहंस्यं, तस्य गुरोः हृद्यावासमर्थयते—**कंसेति** ।

चन्द्रिका

ब्रह्मण्यगुरुराजाख्यो वर्ततांमम मानसे ॥

पदवाक्यप्रमाणाब्धिविक्रीडनविशारदान् ।

लक्ष्मीनारायणमुनीन् वन्दे विद्यागुरून् मम ॥

श्रीमद्भाष्यस्य टीका या जयतीर्थविनिर्मिता ।

गम्भीरा निर्मला चेमां व्याकरिष्ये यथामति ॥

सूत्रे भाष्येऽनुभाष्ये च सन्न्यायविवृतौ तथा ।

टीकासु च यदस्पष्टं तच्च स्पष्टीकरिष्यते ॥

प्रकाशः

'कसत्वंमी' कृष्ण. तस्य पादाब्ध्याम्बुजानुरक्त' परमहंसाश्रमीत्यर्थ. ॥ स्वस्य विद्योपदेष्टॄन् नमति—पदेति ।. इदं तु गुरुत्वे शक्त्युपपादकम् । 'पदं' शब्दशास्त्रं, 'वाक्यं' मीमांसायुग्मं, 'प्रमाणं' तर्कशास्त्रं, बहुवचनं प्राग्वत् ॥ एवं मङ्गलनिचयमाचर्य शिष्यमनस्समाधानार्थं चिकीर्षितं प्रतिजानीते—श्रीमदिति । तत्त्वप्रदीपभ्रान्तिं निरस्यति—जयतीर्थेति । 'या जयतीर्थविनिर्मिता तामिमां' इत्यन्वय. । व्याख्याने हेतुमाह—गम्भीरेति । 'गाम्भीर्यं' गहनार्थत्वम् । 'निर्मलत्व' च अमङ्गलार्थवर्णनादिशून्यत्वम् ॥ स्वप्रवृत्ते फलान्तरमाह—सूत्र इति। निरुपपदसूत्रशब्दस्य ब्रह्मसूत्र एव मुख्यत्वात् 'सूत्रे' इत्यवादि । एवं 'भाष्ये' इत्यपि । 'अनुभाष्ये' अनुव्याख्याने । चशब्दादणुभाष्ये च। टीकास्विति। त्रिविक्रमपण्डिताचार्यकृता तत्त्वप्रदीपाख्या, अनुव्याख्या-

चन्द्रिका

प्रतिसूत्रं प्रकाश्येते घटनाघटने मया ।
स्वीयान्यपक्षयोस्सम्यग्विदांकुर्वन्तु सूरयः ॥

ग्रन्थादौ मङ्गलमाचरति—शुद्धेति । ........................

प्रकाशः

नटीका न्यायसुधा, पद्मनाभाचार्यकृता सन्न्यायरत्नावली च, न्यायविवरणटीका च, तत्त्वप्रकाशिका चेत्येतासु* टीकास्वित्यर्थः । स्वप्रवृत्तेरन्यत्फलमाह—प्रतिसूत्रमिति । स्वपरपक्षयोर्यथाक्रमं 'घटनाघटने विदांकुर्वन्तु जानन्तु । यद्यपि स्वस्येदमित्यर्थे अणि कृते स्वशब्दस्य द्वारादिषु पाठेन "द्वारादीनां च" इति सूत्रेण वकारात्पूर्वमैजागमेनौकारे सति सौवेति भाव्यम् । तथाऽपि स्वस्मै हितमित्यर्थे "प्राक्क्रीताच्छः" इति छप्रत्यये स्वीयेति साध्विति ज्ञेयं, चतुर्थस्य द्वितीयपादे "गहादिभ्यश्च" इत्यत्र दुर्घटवृत्तौ तथैवोक्तेः । ननु भाष्यव्याख्यार्थं प्रवृत्तस्य भगवतो जयतीर्थमुनेः सैव कार्या, किमाद्यपद्येन, मङ्गलाचरणस्यापि "अथातो" इति भाष्यव्याख्यारम्भे माङ्गलिकस्य 'अथ' इत्यस्य प्रयोक्ष्यमाणतया सिद्धत्वादित्यत आह—ग्रन्थादाविति । तस्य तु कृत्यं वक्ष्यत इति भावः । मङ्गलमाचर्य ग्रन्थे निबध्नातीत्यर्थः । मङ्गलपदोपादानेन तस्य प्रारिप्सितपरिसमाप्त्यादिहेतुतया तदनुष्ठानस्य शिष्टाचारपरम्पराप्राप्तत्वेनावश्यकर्तव्यत्वं सूचितं, 'ग्रन्थादौ' इत्युक्त्या च मङ्गलस्य ग्रन्थाङ्गत्वं च । भाष्यव्या-

* "स्वेवमाद्यासु" इत्यपि पाठो दृश्यते.

चन्द्रिका

.... ........ ... .... इदं च पद्यं भाष्यस्याद्यश्लोकविवरणरूपत्वात्तद्वदेव वक्ष्यमाणादिसूचकत्वेन व्याख्येयम् । आनन्दादेरशुद्धत्वं भ्रान्तत्वमानिशयत्वादिराहित्यम् । 'लेप.' पुण्यपापसम्बन्ध. ।

प्रकाश

ख्यानरूपं चेदं, अतो नानुपयुक्तकथनमित्याह—इदं चेति । यद्वा—'ब्रह्म वन्दे' इत्यनेनैव मङ्गलस्य चीर्णत्वात्किं विशेषणै· कृत्यमित्याशङ्क्य व्याख्येयपद्यगतविशेषणकृत्यानीव अत्रापि ध्येयानीत्याह—इदं चेति । वक्ष्यमाणाध्यायार्थसूचकत्वेनेत्यर्थ । आदिपदेन नारायणशब्दाव्याख्यानपरत्ववत् तत्पर्यायब्रह्मशब्दान्वाख्यानपरत्वसूचकत्वेन तस्यैव वन्द्यत्वोपपादकत्वेन चेति ग्राह्यम् । यद्वा—अधिकार्यादिचतुष्टयसूचकत्वेनेत्यर्थ. । "तथा ह्यादिसूत्रे भगवन" इत्याद्यपद्यव्याख्या सर्वाऽप्यत्र यथायोगमनुसन्धेयेति भाव । आद्यार्थस्य 'गुणसर्वैरुदीर्णम्' इत्यस्य विवरणं 'शुद्ध' इत्यादि । तत्र यदि शुद्धत्वं दु खासम्भिन्नत्वं, तदा 'चिन्तादिदोषदूरम्' इत्यनेन गतार्थमन आह—आनन्दादेरिति। द्वितीयार्थस्य "दोषवर्जितम्" इत्यस्य विवृति —'चिन्ता' इति । तत्र चिन्तासन्तापाभ्या 'लेप' सङ्ग इति भ्रान्ति निराह—लेप इति। तृतीयार्थस्य 'ज्ञेय' इत्यस्य विवृति —'मति' इत्यादि । तत्र 'श्रुत्वा' श्रवणेन जाता या मति तया 'नियतं' तद्विषय एव नियमितं यत् 'ध्यान' आलोचनात्मक मनन तज्जनितनिरन्तरानुस्मृतिरूपज्ञा-

तत्त्वप्रकाशिका

याच्ञामन्दरलोलिताद्यत उदैद्विद्येन्दिरा निर्भरै-
र्नीतो भारतपारिजातसुतरुः सद्ब्रह्मसूत्रामृतम् ।
आसीत्तन्त्रपुराणमन्मणिगणो जातः शुकेन्दुस्तदा
सोऽयं व्याससुधानिधिर्भवतु मे भूत्यै सतां भूतिदः ॥

चन्द्रिका

'श्रुतिमती' श्रवणमनने । 'नियतध्यानं' स्वयोग्योपासनम् । 'ज्ञानं' साक्षात्कारः, स एव 'योगः' उपायः । 'अमलं' मुमुक्षूपास्यं न तु परमत इव मुकुन्दाभिधं मन्दोपास्यम् ॥ व्याचिख्यासितभाष्यमूलसूत्रप्रामाण्यं सूचयन् मङ्गलान्तरमाचरति-याच्ञेति । अत्र 'यत उदैद्विद्येन्दिरा' इत्यादिना वक्त्रानुकूल्यं, 'निर्भरैः' इत्यादिना श्रोत्रानुकूल्यं, 'याच्ञा' इत्यादिना प्रसङ्गानुकूल्यं च दर्शयता "वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता" इत्यनुव्याख्यानोक्ता आप्तिमूलता सूत्राणां सूचिता ।

प्रकाशः

नलक्षणध्यानादिति भ्रान्तिं निराह—श्रुतिमती इति । योगउपाय इति । "योगस्सन्नहनोपाय" इत्यभिधानादिति भावः । ननु 'अमलं' निर्दोषमित्यर्थश्चेत् निन्तेत्यादिना गतार्थं, अत आह—अमलमिति । मायारूपमलरहितं, "निर्विशेषं परं ब्रह्म" इत्याद्युक्त्या परमते मायिन एव मन्दोपास्यत्वात् । यद्वा—न विद्यते मलं संसाराख्यं यस्मादित्यर्थः। 'मुमुक्षूपास्यम्' इति पर्यवसितव्याख्यानम्, संसारनिवर्तकस्यैव तदुपास्यत्वादिति भावः। ननु ग्रन्थादाववश्यकार्यस्य मङ्गलस्य कृतत्वात्किं द्वितीयपद्येन। यदि "श्रेयांसि बहुविघ्नानि" इति मङ्गलान्तरस्य कार्यता, तदा "व्यासो भवतु मे भूत्यै" इत्येतावता पूर्तेः किं विशेषणैः कृत्यमित्यत आह—व्याचिख्यासितेति । एतेन सूत्रप्रामाण्यसूचने विशेषणकृत्यमित्युक्तं भवति । 'व्याचिख्यासित' इ-

तत्त्वप्रकाशिका

स्वान्तध्वान्तनिकृन्तने जितमहावैकर्तनांशुव्रजं
निर्दोषं जितचन्द्रचन्द्रिकमलं तापत्रयोन्मूलने।
गाम्भीर्यं जितसिन्धुराजममितं भाष्यं यदास्याम्बुजा
दाविर्भूतममन्दबोधभगवत्पादान् प्रपद्येऽथ तान्॥

चन्द्रिका

ब्रह्मसूत्रपदेन ब्रह्मपरश्रुतिव्याख्यानरूपत्वात् श्रुतिमूलत्वं, न्यायव्यु त्पादकत्वाद्युक्तिमूलत्वं च सूचितम्॥ भाष्यस्य व्याख्येयत्वप्रयोजकं सफलत्वगम्भीरत्वादि दर्शयन् भाष्यकृतं प्रणमति—**स्वान्तेति**। वैक-

प्रकाशः

त्युक्त्या तत्सूचनमपि नानुपयुक्तमित्याह। ब्रह्मपरेति। 'ब्रह्मसूत्र' इत्यत्र तन्त्रेण 'ब्रह्मणः' विष्णोः सम्बन्धि यत् 'ब्रह्म' श्रुतिजातं तस्य 'सूत्राणि' न्यायनिबन्धनात्मकवाक्यानीत्युक्तं भवति। यद्वा—'ब्रह्मणः' श्रुतिजातस्य 'सूत्रं' तन्निर्णायकन्यायनिबन्धनात्मकशास्त्रमित्यर्थः। श्रुतिजातस्य ब्रह्मपरत्वं च वास्तवमित्यभिप्रेत्येति ध्येयम्। 'न्याय' इति 'सूत्र' इत्युक्तिल भ्योऽर्थः॥ ननु भाष्यव्याख्याने तत्कर्तृप्रसादस्यावश्यकतया तत्प्रणामस्य कार्यत्वेऽपि न विशेषणकृत्यमित्यत आह—**भाष्यस्येति**। ध्वान्तशब्दिताज्ञाननिवर्तकत्वतापत्रयोन्मूलकत्वरूपं फलवत्त्वम्। गाम्भीर्यं आपाततोऽप्रतीयमानहृदयत्वम्। आदिपदेनामितशब्दितबह्वर्थत्वग्रहः। प्रणमतीति। यद्यपि 'प्रपद्ये' इति प्रपत्तिरेव श्रुता, तथाऽपि नमनादिनैव सा भवतीति तथोक्तम्। धातूनामनेकार्थत्वान्नमनार्थत्वमुपेत्य वा एवमुक्तम्। ध्वान्तनिवर्तकत्वाद्यविशेषे कथं जितत्वमित्यत-

तत्त्वप्रकाशिका

श्रीमध्वसंसेवनलब्धशुद्धविद्यासुधाम्भोनिधयोऽमला ये ।
कृपालवः पङ्कजनाभतीर्थाः कृपालवस्स्यान्मयि नित्यमेषाम् ॥
श्रीमद्रमारमणसद्गिरिपादसङ्क्रम्याख्यनिनाददलिताखिलदुष्टदर्पम्
दुर्वादिवारणविदारणदक्षदीक्षमक्षोभ्यतीर्थमृगराजमहं नमामि ॥
अथ तत्कृपया ब्रह्मसूत्रभाष्यं यथामति ।
व्याकुर्वे श्रीमदानन्दतीर्थार्यमुखनिस्सृतम् ॥
गङ्गासङ्गेन नैर्मल्यं रथ्याद्भिर्लभ्यते यथा ।
वाचो विशुद्धिसिद्ध्यर्थं सङ्गम्यन्ते गुरोर्गिरः ॥

चन्द्रिका

तेनांशुमज्जादेः स्वान्तध्वान्तनिकृन्तनादावशक्तत्वादेव भाष्येण जितत्वम् ॥ गङ्गासङ्गेन यथा रथ्याद्भिः नैर्मल्यं लभ्यते, तथा मदीयाया वाचो

प्रकाशः

आह—वैकर्तनेनेति । स्वान्तेति । भाष्यस्य तु शक्तत्वाद्विशेष इति भावः । उभयत्रादिपदेन चन्द्रचन्द्रिकायास्तापत्रयोन्मूलनेऽशक्तत्वात्समुद्रस्य चामितत्वाभावादिति ग्राह्यम् । यद्वा—काकोलूकवत् परस्परं युद्धलब्धजयाभावात् कथं तेन जितत्वं तेषामित्यत आह—वैकर्तनेति । एवकारेण लौकिकं जयं प्रत्याह ॥ 'वाचो विशुद्धिसिद्ध्यर्थं' इत्यत्र वाचः कर्तुरश्रवणात् 'गुरोः' इत्यस्यैवात्राप्यन्वये 'गुरोर्वाचो विशुद्ध्यर्थं गुरोर्गिरो मिथः सङ्गम्यन्ते' इत्यस्यायोगात्, गिरां सङ्गतत्वासङ्गतत्वाभ्यां सङ्गतिकरणासम्भवाच्च * इत्याशङ्क्य दृष्टान्तांशं स्फुटीकुर्वन्नपेक्षितपूर्वोत्तरार्धं द्वेधा व्याचष्टे—गङ्गासङ्गेनेति ।

* 'इत्याशङ्क्य' इत्यत प्राक् 'कथमेतत्' इति साध्यमुपस्कार्यम् ॥

तत्त्वप्रकाशिका

अथविद्यापटलपिहितनयनैरन्यैरन्यथा व्याख्यातानि ब्रह्मसूत्राणि यथावद्व्याचिख्यासुर्भगवानाचार्यवर्यः प्रारिप्सितभाष्यस्य कैवल्याद्यखि

चन्द्रिका

विशुद्धिसिद्ध्यर्थं गुरोर्गिरः मदीयया वाचा 'सङ्गम्यन्ते' व्याख्या व्याख्येयभावेन सम्बध्यन्तइत्यर्थः । यद्वा—गुरोर्गिरः परस्परं 'सङ्गम्यन्ते' सम्बद्धतया प्रकाश्यन्तइत्यर्थः ॥ अथाविद्येति । प्रति-

प्रकाशः

रुध्याद्भिरिति । "द्वित्रिभ्यां पद्दन्मूर्धसु" इति निर्देशात् ज्ञापकात् "ऋक्पूरब्धूःपथामानक्षे" इति समासान्तोऽनित्य इति भावः। यद्वेति। 'मदीयया वाचा' इत्यनुकर्षः । अस्मिन् पक्षे वाचो गीर्भिः सङ्गतिरार्थकीति न दृष्टान्तानानुगुण्यम् ॥ ननु 'अथाविद्या' इत्यत्राथशब्दो न मङ्गलार्थः, तस्य कृतत्वात् । नाप्यानन्तर्यार्थः, कस्याप्यर्थस्य भाष्ये पूर्वं अप्रकृतत्वात्, भाष्यकृन्नमनस्य टीकाकृत्कृतव्याख्याप्रतिज्ञानन्तर्यायोगात्। नाप्यारम्भार्थः, 'आरभ्यते' इत्यनुक्त्वाऽप्यारब्धे इदमनेनारब्धमिति ज्ञातुं शक्यत्वात् । 'व्याकुर्वे' इत्युक्त्यैव व्याख्या प्रारभ्यत इत्यस्य लाभाच्च । प्रश्नाद्यर्थकत्वशङ्काऽनवकाशाच्च व्यर्थ इत्यत आह—अथाविद्येतीति । यद्यपि 'प्रतिग्रन्थव्याख्यानमारभ्यते' इत्यनुक्त्वाऽपि तस्मिन्नारब्धेऽनेन प्रतिग्रन्थव्याख्या आरब्धेति ज्ञातुं शक्यम् । तथाऽपि शिष्यमनस्समाधानार्थं प्रतिग्रन्थव्याख्यानमारभ्यत इति वक्तुमथशब्दं प्रयोमीति ध्येयम् । ननु भाष्यस्याखिलफलसाधनतासिद्धिः कथं नमस्कारमात्रात्स्यादित्यत आह—

तत्त्वप्रकाशिका

लफलसाधनतासिद्ध्यर्थं निरन्तरायपरिसमाप्त्याद्यर्थं च नारायणनमस्कारं ग्रथयति ग्रन्थारम्भं च प्रतिजानीते—**नारायणमिति** । अत्र निरुपपदसूत्रशब्देन ब्रह्मसूत्रमुच्यते, तस्य मुख्यार्थाभिधायकत्वात्, तेषां च तादृशत्वात् । वक्ष्यमाणमेव सूत्रार्थं श्रोतृशेमुषीमनुकूलयिष्यन्नादौ प्रस्तावयितुं विशेषणचतुष्टयेनेष्टदेवतां विशिनष्टि । तथाहि—आदिसूत्रे भगवतः प्रसत्त्या पुरुषार्थो भवतीति सूचितेऽधिकारिणः शङ्कोन्मिषति पुरुषान्तरेऽनुपलभ्यमानं पुरुषार्थप्रदत्वं तस्य चेत् कीदृशोऽसाविति । तां निवारयदाद्याध्यायस्यार्थो **गुणैः सर्वैरुदीर्णमिति**, तत्र हि अपर्यायानन्तशब्दानां महायोगवृत्त्या हरौ समन्वयसमर्थनद्वारा सर्वगुणोदीर्णतैव वर्ण्यते । स च युक्त्यादिभिरुक्तसमन्वये विरोधिते दोषवानपि स्यादित्याशङ्कां परिहरतो द्वितीयाध्यायस्यार्थो **दोषवर्जितमिति,** तत्र युक्त्यादीनामाभासत्ववर्णनेन निर्दोषत्वस्यैव भाषितत्वात् । एवंविधस्य च प्रसादः कया विधया भविष्यतीत्याशङ्कां पूरयतः तृतीयस्या-

चन्द्रिका

मन्थव्याख्याप्रारम्भार्थोऽथशब्दः । **फलसाधनतासिद्ध्यर्थमिति** । समङ्गलस्यैव सफलत्वादिति भावः । **भगवतः प्रसत्त्या पुरुषार्थो भवतीति सूचित इति** । भगवत्प्रसादस्य मोक्षहेतुत्वेऽत्र शब्देन

प्रकाश

—**समङ्गलस्येति** । अत्रशब्देनोक्तत्वात् कथं सूचनमित्यत आह—**भगवदिति** । ननु भाष्ये आदौ वक्ष्यमाणार्थकथनस्य श्रोतृ-

तत्त्वप्रकाशिका

र्थो ज्ञेयमिति, तत्र विरक्त्यादिभिस्तत्प्रसत्त्यर्थं तस्य ज्ञेयताया: कथितत्वात् । प्रसन्नश्च कीदृशं पुमर्थं प्रयच्छतीत्याशङ्कां पूरयतः तुरीयस्यार्थो गम्यमिति, तत्र ज्ञानिनो भगवत्प्राप्तिलक्षणमोक्षस्योदितत्वात् । अथ वा—नैतत् नारायणपदं देवदत्तादिपदवत्साङ्केतिकं भवति, किन्तु विशिष्टगुणानप्याचष्टे इत्याशयवान् पदचतुष्टयेन तन्निर्वक्ति । तथा हि—दोपारशब्दयोरभिन्नार्थत्वात् नञश्च विरुद्धार्थवाचित्वात् दोषविरुद्धा गुणा नारा, तदाश्रयो नारायणः । नञोऽभावार्थत्वात् अराश्रयो न भवतीति वा

चन्द्रिका

संक्षिप्योक्ते इत्यर्थः । विशिष्टगुणानप्याचष्टे इति । नारायणशब्दस्य विशिष्टगुणवाचकत्वप्रदर्शनं च तस्य ब्रह्मशब्दसमानार्थत्वात् शास्त्रार्थवाचकत्वाच्च नारायण एव शास्त्रार्थ इति दर्शयितुम् । न रीयत इति । नञुपपदात् "रीङ् क्षये" इत्यस्माद्धातोः करणे डप्रत्यये प्रज्ञादित्वात् स्वार्थिकेऽण्प्रत्यये च कृते

प्रकाश

बुद्ध्यानुकूल्यरूपफलवत्त्वेऽपि नारायणशब्दान्वाख्यानस्य न किञ्चित्फलमत आह—विशिष्टेति । 'न रीयतेऽनेन' इत्यत्र डप्रत्यये कृते 'नरं' इति स्यात्, 'नारं' इति कथमत आह—नरीयत इतीति । औणादिके डप्रत्यये टिलोपे च 'नरं' इति भवति । तत "प्रज्ञादिभ्यश्च" इति स्वार्थिकाणप्रत्यये "तद्धितेष्वचामादेः" इत्यादिवृद्धौ "यस्येति च" इत्यकारलोपे वक्ष्य-

तत्त्वप्रकाशिका

नारायणः। नरसम्बन्धित्वात्, नरीयतेऽनेनेति वा, न अरमणं येनेति वा, निर्दोषवेदोत्पन्नत्वाद्वा नारं ज्ञानं, विषयतया तदाश्रयत्वाच्च नारायणः। अनिधुरत्वादरतिरहितत्वात्क्षयरहितत्वाद्वा नाराः

चन्द्रिका

नारमिति रूपसिद्धिरिति द्रष्टव्यम्। 'अरमणं' दुःखम्। निर्दोषवेदोत्पन्नत्वादिति। निर्दोषवेदवाचकात् नारशब्दात् "तस्येदम्" इत्यणि

प्रकाशः

माणरीत्या नलोपाभावे च 'नारं' इति सिद्धमित्यर्थः। अरमणं रमणाभाव इति भ्रान्तिं निराह—अरमणमिति। 'नारं' इत्यनेन कथं निर्दोषवेदोत्पन्नत्वस्य लाभ इत्यत आह—निर्दोषेति। न विद्यन्ते अरा दोषा निरर्थकत्वादयो यस्य सोऽयं नारो वेदः। ततोऽणि "यस्येति च" इति लोपे 'नारं' इति सिद्धम्। सम्बन्धश्च जन्यजनकभाव इति भावः। ननु नारशब्दात् "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" इति वृद्धसंज्ञाया "वृद्धाच्छः" इति छप्रत्यये 'नारीयं' इति भाव्यम्, कथं 'नारं' इति। सत्यं; "वा नामधेयस्य वृद्धसंज्ञा" इति वा, "ओर्गुणः" इत्यत्र गुणग्रहणेन ज्ञापनात् "संज्ञापूर्वको विधिरनित्यः" इति वा 'नारं' इति साधु। अत एव तृतीयस्य द्वितीयपादे "स्पृहिगृहिपतिदयि" इति सूत्रे 'श्रद्धालु' इत्यत्र "श्लौ" इति द्विर्वचनमाशङ्क्य "संज्ञापूर्वको विधिरनित्यः" इति द्विर्वचनं नेत्युक्तं मञ्जर्याम्। ननु 'अरायणो न' इत्यादिव्युत्पत्तौ नञो नलोपे

तत्त्वप्रकाशिका

मुक्ताः, तदाश्रयो नारायणः। नगनाकादिशब्दवदयं शब्दो ज्ञातव्य । अथ वा—नारायणस्यैव नम्यत्वोपपादकमेतत् । यो हि बहुगुणो विदोष शास्त्रज्ञैयोऽधीतशास्त्रगम्य. स वन्द्यो भवति ।

चन्द्रिका

कृते नारशब्दो वेदजन्यज्ञानवाचीति भाव ।नगनाकादिशब्दवदिति। ननु—"नभ्राण्नपात्" इत्यादिसूत्राभ्या नाकनगशब्दयोर्नलोपाभाव उक्त', नारायणशब्दे तु नेति, कथ तद्दृष्टान्तीकरणमिति चेत्, मैवम्, 'स्त्रैणार्थः' इत्यत्र "स्त्रीपुंसाभ्या" इत्यादिना विहितस्य नञो नलोपाभावार्थं "नलोपो नञ" इति सूत्रे 'रात्रि कृति विभाषा"

प्रकाश

नुटि च सति अनरायणेति भाव्यमित्याशङ्क्योक्तं मूले "नगनाकादिशब्दवत्" इति, तत्राक्षिपति—नन्विति । "नभ्राण्नपान्नवेदा नासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या" इति सूत्रेण नाकशब्दस्य, "नगोऽप्राणिष्वन्यतरस्याम्" इति सूत्रेण नगशब्दस्य नलोपाभावो निपातित इत्यर्थ । नगनाकादौ यथा सौत्रत्वात्साधुत्वमेवमिहापि सौत्रत्वादेव समाधानमिति टीकाशय इत्यभिप्रेत्य सौत्रत्वप्रकार दर्शयति—मैवमित्यादिना । स्त्रीशब्दात् हितार्थे "स्त्रीपुंसाभ्या नञ्स्नञौ भवनात्" इति नञ्प्रत्यये 'स्त्री नञ्' इति स्थिते नित्त्वादादिवृद्धौ णत्वे च 'स्त्रैण' इतिरूपं, ततोऽर्थशब्देन समासे 'स्त्रैणार्थ' इति भवति । तत्र "नलोपो

चन्द्रिका

इत्यतोऽनुवृत्ताया विभाषायाः व्यवस्थितविभाषात्वस्य न्यास एवोक्तत्वेन नारायण इत्यत्रापि नलोपाभावाद्युपपत्तेः। यद्वा—नसमा-

प्रकाशः

नञः" इति नलोपे कार्ये णत्वस्यासिद्धतया नलोपे "तस्मान्नुडचि" इति नुटि कृते 'स्त्रायनर्थ' इति प्राप्नोति। तत्र "रात्रेः कृति विभाषा" इत्यव्यवहितपूर्वसूत्राद्विभाषापदमनुवर्त्य नञो नलोपो भवति विभाषेति षष्ठे तृतीयपादे व्याख्यातम्। तद्वनश्व इत्यादावपि रूपद्वयं प्राप्नोति। अतः क्वचिन्नित्यं स्यात् क्वचिन्नैव स्यादिति व्यवस्थितविकल्प इति वृत्तिव्याख्यानं न्यास एवोक्तं नास्माभिर्यतितव्यमित्यर्थः। आदिपदेन नुडभावग्रहः। ननु विभाषापदानुवृत्तौ "नभ्राणनपात्" इत्यादिसूत्रं व्यर्थं, तत्रापि उक्तरीत्या समाधानसम्भवात् प्रपञ्चनस्यागतिकगतित्वात्। परिगणनत्वे प्राप्तः स एव दोषः। अतो ज्ञायते नात्र तदनुवृत्तिरस्तीत्यनुशयेनाह—यद्वेति। अस्मिन् पक्षे "नभ्राट्" इत्यादिस्तु नञ्स्वरार्थं नञ्समास इति भावः। मञ्जर्यां तु नञ्प्रत्ययस्य नलोपमाशङ्क्य प्रत्ययञित्त्वस्य वृद्धिस्वरयोश्चरितार्थत्वात् निपातञित्त्वस्याचरितार्थत्वात् निपातस्यैव नञो "नलोपो नञः" इति सूत्रे ग्रहणं, न प्रत्ययनञः इत्येकं समाधिमुक्त्वा, उत्तरपदाधिकारवशात्पूर्वपदस्य नञ इत्याक्षेपात्प्रत्ययनञोऽपूर्वपदत्वान्न नलोप इत्युक्तम्। तन्मते विभाषापदाननुवृत्तेस्तदनुरोधेन वाऽऽह—यद्वेति।

चन्द्रिका

मोऽस्तु। अत्र "पूर्वपदात्संज्ञायामग" इति णत्वं, ल्युटः टित्करणसामर्थ्येन अयनशब्दो विकरणे त्रिलिङ्ग इति पुंलिङ्गत्वं च

प्रकाश

"अमानोना प्रतिषेधे" इति निषेधार्थकनशब्देन "सुप्सुपा" इति समासः। तथा च नञोऽभावान्न नलोपः। अत एव कौमुद्यां 'नैकधा' इत्यादौ नसमास इत्युक्तमिति भावः। समासस्थले सत्यप्येकपद्ये "रषाभ्यां नो णः समानपदे" इत्यत्र विवक्षितस्य समानमेव पदं समानपदं न तु पूर्वोत्तरपदव्यवहारभागित्येवरूपसमानपदत्वस्याभावात्कथं णत्वमित्यत· सुधोक्तमाह—अत्रेति। ननु "नपुंसके भावे क्त" इति 'नपुंसके' इत्यनुवर्तमाने "ल्युट्" "करणाधिकरणयोश्च" इति ल्युटो विधानेन 'नारायण' इति नपुंसकलिङ्गेन भाव्यमित्यत आह—ल्युट इति। ल्युट टित्करणं हि "टिड्ढाणञ्" इत्यादिना ङीबर्थम्। यदि ल्युडन्तस्य क्लीबत्वमेव, तर्हि स्त्रीत्वाभावात् तन्निमित्तकङीबर्थं टित्करणमनर्थकम्। तेन ज्ञायते लिङ्गान्तरमस्तीति सामान्यतो ज्ञापनात्पुंलिङ्गत्वोपपत्तिरित्यर्थः। 'अधिकरणे' इति प्रकृताभिप्रायेण। अत एव महाभाष्ये—"भूवादयो धातवः" इत्यत्र 'कोसावनुमानो नाम' इति करणे पुंलिङ्गप्रयोगः। यद्यपि वृत्तौ "करणाधिकरणयो" इति सूत्रे 'नपुंसके' इत्यस्यानुवृत्तेरनुक्ते 'इध्मप्रव्रश्चन' इत्युदाहरणे पुंलिङ्गोक्तेश्च 'नपुंसके' इति नानुवर्तते इत्येव सुवचम्। तथाऽपि तदननुवृत्तिरेव टित्करणेन ज्ञाप्यत इत्येवमुक्तमित्यदोषः। वृत्तिकारस्यापीदमेव बीजमित्युक्तं भवति। भाष्ये गुरुदेवतासमुच्चायकचशब्दसत्त्वात् 'अपि' इत्यस्य वैयर्थ्यं निरसितुं टीकायां "स्वस्य गुरुदेवताभेदे" इत्याद्युक्तम्। तत्र 'यद्यपि' इत्यादेरन्वयाभावात् प्रकारा-

तत्त्वप्रकाशिका

देवतानतिसमनन्तरं गुरूनपि नमति—गुरूंश्चेति । "गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि" इत्यतो न तन्नाम जग्राह । स्वस्य गुरुदेवताभेदेऽरुचिं सूचयत्यपिपदेन । यद्यपि गुरुर्न देवताभिन्न, तथाऽपि विशेषानुग्रहार्थं पृथङ्नतिरिति । अनेनैव शास्त्रस्याधिकारिविषयप्रयोजनसम्बन्धाश्च श्रोतृप्रवृत्त्यङ्गभूता सूचिता ज्ञातव्या । तत्स्मरणस्य महाफलहेतुत्वाच्च । तदुक्त—

अधिकार फल चैव प्रतिपाद्य च वस्तु यत् ।
स्मृत्वा प्रारभतो ग्रन्थ करोतीशो महत्फलम् ॥ इति ॥

नमस्काराधिकार्यादिग्रथनसूचने शिष्यशिक्षार्थम् । तथा हि—श्रे-

चन्द्रिका

द्रष्टव्यम् । "पृथङ्नतिरिति" इत्यत्रेतिशब्दस्य "इत्यरुचिं सूचयति" इति पूर्वेणान्वय । विघ्नाभावस्य नमस्कारेणैव सिद्धेर्ग्रथन व्यर्थम्, एवमधिकार्यादिसूचनस्य प्रवृत्त्यङ्गतया कर्तव्यत्वेऽपि न महाफलार्थं तत्कार्यं, तत्स्मरणेनैव फलसिद्धेरित्यत आह—**नमस्काराधिकार्यादिग्रथनसूचने इति ॥**

प्रकाश

र्थेऽनिशब्देनान्वयमाह—**पृथगिति** ।

नमस्कारस्य विघ्नोत्सारणार्थं अधिकार्यादिसूचनस्य प्रवृत्त्यर्थं कार्यतया फलस्य स्पष्टत्वात् फलोक्तिरयुक्तेत्यत आह—**विघ्नाभाव**

तत्त्वप्रकाशिका

यत्वगम्यत्वयोर्ज्ञातृगन्तृसापेक्षत्वात् तद्योग्यस्तदिच्छुरेवाधिकारी सूचित । नारायण एव विषय । तज्ज्ञानगमने प्रयोजनम् । यथायोग्यं सम्बन्ध इति ॥ ननु यदुपादेयं तदेवानन्यार्थतया व्याख्येयम् । यच्च प्रमाणत्वे सतीष्टसाधनताऽवबोधकं प्रायस्त देवोपादेयम् । अतः कथं ब्रह्मसूत्राणा व्याख्येयत्वोपयोग्युपादे

चन्द्रिका

अनन्यार्थतयेति । प्रातीतिकार्थान्तरपरं न भवतीत्यनेन प्रकारेणेत्यर्थ । प्रायस्तदेवोपादेयमिति । अप्रमाणत्वादिना निश्चितस्यापि ख्यात्याद्यर्थं व्याख्यानदर्शनात् 'प्राय' इत्युक्तम् । "अथेष्टानिष्ट" इति भाष्ये 'अथ' इत्यस्य अवतारानन्तरमेव न तु परोपदेशमपेक्ष्य येन स्वतस्मा-

प्रकाश

म्येति । 'तत्कार्यं' अधिकार्यादिसूचनं कार्यं । 'तत्स्मरणेनैव' अधिकार्यादिस्मरणेनैव । स्मरणस्यान्यथाऽपि सम्भवादिति भाव ॥ "अनन्यार्थतया व्याख्येयं" इत्यत्र स्वप्रयोजनतया व्याख्येयमिति भाति । तदयुक्तं, व्याख्यनस्यान्यार्थत्वादित्यतोऽर्थमाह—प्रातीतिकेति ॥ "अनेन प्रकारेण" इति तृतीयार्थ । प्राय पदव्यावर्त्यस्य दुर्गमत्वादाह—अप्रमाणत्वादिनेति ॥ "अथेष्ट" इतिभाष्ये अथशब्दस्य मङ्गलप्रश्नाद्यर्थत्वायोगादानन्तर्यार्थत्वे चातिशयाभावेन वैयर्थ्यमित्यत आह—अथेत्यस्येति । अतएव प्रमेयदीपिकाया "व्यासोऽवत-

द्वापरे सर्वत्र ज्ञाने आकुलीभूते तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान् नारायणो व्यासत्वेनावततार । अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थं वेदमुत्सन्नं व्यञ्जयंश्चतुर्धा व्यभजत् चतुर्विंशतिधैकशतधा सहस्रधा द्वादशधा च ।

तत्त्वप्रकाशिका

यतायै प्रामाण्यादीत्याशङ्कां परिहर्तुं सूत्रागतिक्रममाह—द्वापर इति । 'सर्वत्र' इतिसार्वत्रिकपुरुषोक्तिः । 'ज्ञाने' सम्यग्ज्ञाने 'आकुलीभूते' किमिदमदो वेति सन्दिग्धे अन्यदेवेति मिथ्यादृष्टिदुष्टे च । आकुलीभावसमर्थनाय द्वापरग्रहणम् । 'तद्योगं' इष्टप्राप्त्यनिष्टपरिहारोपायम् । "वेदमुत्सन्नं" इत्यादेः अपपाठादिना तिरोहितं प्रागेव चतुर्धा विभक्तं वेदं ऋङ्निगदादिरूपं व्यक्तीकृत्यैकैकस्मादेकैको भाग इति चतुर्धा व्यभजदेकैकं चावान्तरमृगादिवेदं चतुर्विंशत्यादिशाखाभेदेन व्यभजदित्यर्थः । तदुक्तम्—

ऋचस्स ऋच उद्धृत्य ऋग्वेदं कृतवान् प्रभुः ।
यजूंषि निगदाच्चैव तथा सामानि सामतः ॥ इति ॥

चन्द्रिका

वैज्ञर्थं न स्यादित्यर्थः । "वेदमुत्सन्नमित्यादेः" इत्यस्य 'इत्यर्थः' इति वक्ष्य-

प्रकाशः

तार । ततश्चेष्टानिष्टप्राप्तिपरिहार" इति भाष्यगतस्य 'ततश्च' इत्यस्यावतारानन्तरमेवेत्यर्थ उक्त इति भावः । एतेन "अथ अनन्तरमेव" इति तत्त्वप्रदीपवाक्यं विवृतं भवति । "वेदमुत्सन्नं" इत्यादेरन्वयाभावादाह—वेदमुत्सन्नमित्यादेरित्यस्येति ॥ "अवान्तरवेदादि" इत्यस्य दुर्गम-

तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार । तच्चोक्तं स्कान्दे—

तत्त्वप्रकाशिका

अवान्तरवेदादिविभागकथनं च ज्ञानाकुलीभावसमर्थनार्थं, "चक्रे वेदतरोश्शाखा दृष्ट्वा पुंसोऽल्पमेधसः" (श्रीमद्भाग. १ ....) इत्यादेः । अयं भावः—वाक्यप्रामाण्यं तावत् निर्दोषतया सम्भवति । निर्दोषता चापौरुषेयतया आप्तिमूलतया च । आप्तिश्च वक्तृनिर्दोषतैव । आप्तिमूलत्वात् ब्रह्मसूत्राणां प्रामाण्यसिद्धिः, प्रमादाज्ञानसंशयविपर्ययाणां नारायणावतारे व्यासेऽसम्भवात् भगवत्त्वादेव, विप्रलम्भकत्वस्य च श्रोतृदोषनिबन्धनस्य तदभावेनाभावनिर्णयात्, ज्ञानायोग्यताया ब्रह्मादिश्रोतृष्वभावात्, अपहासस्य च प्रसङ्गदोषनिबन्धनस्य तदभावेनाभावनिर्णयात्, अज्ञाननिर्हरणस्य च प्रसक्तत्वेन प्रसङ्गदोषाभावात्, आप्तिमूलत्वेनैव प्रामाण्यसिद्धौ सुतरां श्रुतिनिर्णायकत्वेन श्रुतियुक्तिमूलत्वात् । इष्टानिष्टप्राप्तिपरिहारसाधनवेदनहेतुवेदनिर्णायकत्वेनेष्टसाधनाववोधकत्वं च सिद्ध्यति । अतो ब्रह्मसूत्राणामत्युपादेयत्वात् व्याख्येयतेति । उक्तमेवार्थं प्रमाणेन स्थापयति—तच्चेति । 'स्थितं' यथोत्पन्नं तथैव । 'अन्यथा

चन्द्रिका

माणेनान्वय.। अवान्तरवेदादिविभागकथनमिति। स्वत एव ऋङ्निगदादिरूपादेकैकस्मात् महावेदादुद्धृतस्यावान्तरस्य ऋगादिवेदस्य चतु-

प्रकाश

त्वाद्द्वैधाऽर्थमाह—स्वत एवेति । "तदल्पाक्षरत्वम्" इत्यत्र विवक्षिता-

नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥
गौतमस्य ऋषेश्शापात् ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः ॥
शरण्यं शरणं जग्मुर्नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदानुज्जहार हरिस्स्वयम् ॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ॥

तत्त्वप्रकाशिका

जातम्' इदमदो वेत्ति सन्दिग्धं अन्यदेवेति मिथ्यादृष्टिदुष्टं च । 'अखिलं अन्यथा जातं' कालतो भागद्वयस्यान्यथात्वं युक्तं, न सर्वस्येत्यतो विशेषकारणं चाह—गौतमस्येति । 'अज्ञानतां' अज्ञानमिति प्रतीतिविषयतां सन्देहगोचरतां च । ब्रह्मादिबुद्धिसङ्कीर्णता नाम मज्जनानुक्रोशयुक्तैव, नाज्ञानादिमिश्रत्वम्, गौतमशापस्य स्वहतगोनिर्मातृमात्रविषयत्वात्, कालाभिभवशून्यत्वाच्च तेषाम् । लोकस्य च सम्प्रदायप्रवर्तकाभावेन कालतश्चाज्ञानप्राप्तिः । तदुक्तमन्यत्र—"नष्टधर्मज्ञानलोककृपालुभिर्ब्रह्मरुद्रेन्द्रादिभिः" इत्यादि ।

प्रकाशः

र्थासिद्धिरेव अल्पाक्षरत्वमिति भाति । तच्चायुक्तमिति विवक्षितपूर-

कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥
अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥

तत्त्वप्रकाशिका

'तस्य' वेदस्य । बहुवचनप्रयोगेऽपि नार्थभेदः शङ्कनीय इति भावेनैकवचनम् । वेदनिर्णयाय सूत्रान्तरैरलं किमेभिरित्यत आह— येषामिति । किं तत्सूत्रत्वं यदाञ्जस्यं ब्रह्मसूत्राणामित्यत आह— अल्पेति । यावदक्षरतां विना विवक्षितार्थासिद्धिः तदल्पाक्षरत्वम् । एवं च भवितुमर्हतीत्यवचनमसन्दिग्धत्वम् । विशिष्टार्थता सारवत्त्वम् । बहुशाखानिर्णायकत्वं विश्वतोमुखत्वम् । व्य-

चन्द्रिका

विंशत्यादिशाखाभेदेन । आदिपदेन शाखानां चोपशाखाभेदेन कथनमित्यर्थः । यद्वा—महावेदस्य अवान्तरवेदत्वेन आदिपदेन चतुर्विंशत्यादित्वेन च विभागकथनमित्यर्थः । तदल्पाक्षरत्वमिति । यावदक्षरतां विना विवक्षितार्थासिद्धिस्तदर्थप्रतिपादनाय ततोऽधिकाक्षरानुपादानं अल्पाक्षरत्वमित्यर्थ । बहुशाखानिर्णायकत्वमिति । सद्व्याक-

प्रकाशः

रणेन अर्थमाह—यावदिति ॥ यदि बहुशाखानिर्णायकत्वं विश्वतोमुखत्वं, तर्हि शब्दान्वाख्यानपरे महाव्याकरणसूत्रे देवमीमांसासूत्रादौ चाव्याप्तिरित्यत आह—सद्व्याकरणेति । 'अल्पाक्षरं' इत्य-

निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।
यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् ॥
सविशेषणसूत्राणि ह्यपराणि विदो विदुः ।

तत्त्वप्रकाशिका

र्थाक्षरादिराहित्यं अस्तोभत्वम् । अपशब्दादिवैधुर्यं अनवद्यत्वम् । एतच्च सूत्रत्वं कुतो ब्रह्मसूत्राणामाञ्जस्येनेत्यतआह—निर्विशेषितेति । यतो ब्रह्मसूत्राणां मुख्यसूत्रत्वं, अत एव निर्विशेषितसूत्रत्वमप्यस्ति पुराणादावन्यथा तन्न स्यादित्यर्थ । यद्यत्र निर्विशेषितं तत्तत्र मुख्यं यदमुख्यं तद्विशेषितमित्येतत्कुत्र दृष्टमित्यत आह—यथेति । यथा कृष्णस्य निर्विशेषितव्यासत्वं, अत एव तन्मुख्यं, अन्ये द्रौण्यादयोऽमुख्याः ततश्च विशेषणाद्व्यासाः, तथा निर्विशेषितत्वान्मुख्यसूत्रत्वं ब्रह्मसूत्राणामित्यर्थः । अन्यसूत्राणामपि मुख्यसूत्रत्वात्किं विशिष्याभिधीयते ब्रह्मसूत्राणामेवेत्यत आह—सविशेषणेति । अन्यसूत्राणां सविशेषणत्वात् न मुख्यत्वमिति भावः । एतदुपपादनायैव 'अन्ये विशेषणात्' इति प्रागेव

चन्द्रिका

रणसूत्रादेरपि बहुशास्त्रागतपदार्थनिर्णायकत्वात् नाव्याप्तिरिति ज्ञेयम् । व्यर्थाक्षरादिराहित्यमिति। अर्थाप्रतिपादकत्वेऽपि साम्नि स्तोभाक्षराणां

प्रकाशः

नैनैव व्यर्थाक्षरराहित्यस्य लाभात् 'अस्तोभम्' इति व्यर्थमित्यतोऽभिप्रायमाह—अर्थेति । 'कारणान्तरसम्भवात्' इत्यस्य "मुख्यस्य निर्वि-

मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ॥
इति वेदविदः प्राहु शब्दतत्त्वार्थवेदिनः ।
सूत्रेषु येषु सर्वेऽपि निर्णयास्समुदीरिताः ॥

तत्त्वप्रकाशिका

दृष्टान्त उक्तः । निर्विशेषणसविशेषणत्वाभ्यां कुतो मुख्यामुख्यत्वे, दृष्टान्ते कारणान्तरसम्भवादित्यत आह—मुख्यस्येति । 'मुख्यस्य' मुख्यस्यैव । अस्त्वेतत्सूत्रत्वमञ्जसा ब्रह्मसूत्राणां तथाऽपि वेदार्थनिर्णयाय सूत्रान्तरैरलं किमेभिरित्यस्य कथमनेन परिहार इत्यतआह—सूत्रेष्विति । यत्सूत्रधर्मतयोक्तं विश्वतोमुखत्वं, तद्यदा ब्रह्मसूत्राणामेवाञ्जसा भवति, तदा तेषामेव सर्वशाखानिर्णायकत्वं भवेदतोऽन्यसूत्रेभ्योऽतिशयेन निर्णायकत्वात्तद्वचनं युक्तमिति भावः । अन्येषामपि द्वित्रशाखानिर्णायकत्वात्कथमेषां सर्वनिर्णा-

चन्द्रिका

ऋगक्षराव्यासगानभागपरिपूरणायैव प्रयोजनान्तराय अक्षराप्रयोग इत्यर्थ । कारणान्तरसम्भवादित्यत आहेति । 'मुख्यस्य' इति मूलग्रन्थे मुख्यस्य निर्विशेषणशब्दवाच्यत्वे "इति वेदविद' प्राहु'" इत्यनेन वेदस्य वृद्धव्यवहारस्य च प्रमाणीकृतत्वात् तेन शङ्कायाः

प्रकाश

शेषेण" इत्यनेन कथमुत्तरमित्यत, उत्तरार्धेन तच्छब्धमित्याह—मुख्यस्येतीति ।· वेदस्येति । अस्यार्थस्य वेदोक्तत्वाभावे तद्विदामितइक्तेरयोगात् 'वेदस्य प्रमाणीकृतत्वात्' इत्युक्तम् ॥ "शब्दजा-

शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः ।
एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ॥
ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।
ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः ॥ इत्यादि ॥

तत्त्वप्रकाशिका

यक्तत्वमन्यथा तद्वैयर्थ्यमित्यत आह—शब्देति । 'सर्वस्य शब्दजातस्य निर्णयः' इति सर्वैः शब्दसमूहैः क्रियमाणो निर्णयः । 'यत्प्रमाणो' यन्मूलकः । अन्येषां निर्णायकत्वेऽपि ब्रह्मसूत्राणाम स्यैव सर्वशाखानिर्णायकत्वम् । तन्निर्णयस्य ब्रह्मसूत्रमूलत्वेन व्याख्यानरूपत्वात् । श्रुतिमूलकस्मृतिवद्वैयर्थ्योपपत्तेरिति भावः । 'एवं विधानि' इत्युपसंहारः । 'सूत्रेषु' इत्यादेः 'एवंविधानि' इत्यनेनान्वयः । 'ब्रह्मरुद्रादिदेवेषु' 'ज्ञानं संस्थाप्य' इत्यनेन पूर्वस्थितस्यैव विशेषयुक्त्यादिभिर्दृढीकरणं किञ्चिदप्राप्तलाभश्चोच्यते, "जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा । पृच्छन्ति साधव·" इत्यादि । "एवं ज्ञानं

चन्द्रिका

परिहार इति भाव. । शब्दसमूहै· क्रियमाण इति । 'शब्दजातस्य' इति षष्ठी कर्तरि न तु कर्मणीत्यर्थः ॥

प्रकाशः

तस्य" इति षष्ठ्यन्तेन कथमस्यार्थस्य लाभ इत्यत आह—शब्दजातस्येति । "कर्तृकर्मणोः कृति" इति कर्तरि षष्ठीति भावः । शब्दाना करणत्वेऽपि अवान्तरव्यापारापेक्षया कर्तृत्वमिति ध्येयम् ॥

तत्त्वप्रकाशिका

पुन प्राप्नु " इत्यादिश्चायमेवार्थ । विरिञ्चेनरेषा तिरोहितलाभो वा। यत आहु "ब्रह्मणस्तु मायो नामतिमासितम्" इत्यादि । तदेव-मत्युपादेयत्वाद्व्याख्येयानि ब्रह्मसूत्राणीति स्थितम् ॥

चन्द्रिका

परोक्ते दूप्य एवाशो मितैशब्दैरनूद्यते ।
दूषण चापि हनुमद्भाष्यसूचितमुच्यते ॥

प्रकाश

"तत्रादिसूत्रस्येद सङ्गत्यादि" इत्यत्रेदशब्देन परोदीरित सङ्गत्यादिकमयुक्तमिति टीकाया सूचितम् । तद्विवरीतु प्रतिजानीते—परोक्त इति । इद तु शिष्यमनस्समाधानाय । उत्तरार्धेन दूषणाना परमाप्तोक्तिमूलत्वेन बलवत्तामाह । तत्र "हनुशब्दो ज्ञानवाची" इति स्मृते हनु ज्ञानम् ।

भूमनिन्दाप्रशसासु भवन्ति मतुबादय ।
ससर्गेऽस्तिविवक्षाया नित्ययोगेऽतिशायने ॥

इत्युक्तेर्भूमार्थे मतुप् । पूर्णबोध इत्यर्थ । यद्वा—तस्य हनुमदैक्यात् तथोक्ति । सज्ञापूर्वकविधेरनित्यत्वात् हनुशब्दे "शरादीना च" इति न दीर्घ । "सज्ञायाम्" इति सूत्रेण मतुपो मकारस्य वत्वाभावो यवादित्वादित्युक्त धातुवृत्तौ । चोऽवधारणे । सूचितमेवेत्यर्थ । भाष्येति अनुभाष्यादिक च ग्राह्यम् । भाष्ये अधिकरणशरीरस्या-स्पष्टत्वात्तद्विवरणपरयोर्वाचस्पत्यविवरणयो स्पष्टत्वेनादौ वाचस्पत्यो-

चन्द्रिका

तत्र भामत्युक्तमधिकरणं—प्रत्यगात्मन एव ब्रह्मत्वात्तस्य चाहमिति प्रकाशमानत्वेनासन्दिग्धत्वान्न विषयत्वम् । नाप्यविद्यानिवृत्तिः प्रयोजनम् । उक्तरीत्या आत्मनि भासमानेऽपि तदनिवृत्तेः । नच वाच्यमहंप्रत्ययः स्थूलोऽहं कर्ता भोक्ता दुःखीति गृह्णाति तद्विपरीतश्च वेदान्तप्रतिपाद्यः सन्दिग्ध इति विषयादिसिद्धिरिति । वेदान्तानामध्ययनविध्यापादितप्रयोजनवदर्थावबोधानामपि प्रबलाहंप्रत्ययबाधितत्वेन जपमात्रोपयोगित्वेन अविवक्षितार्थत्वादुपचरितार्थत्वाद्वा । तथा च वेदान्तविचारोऽनारब्धव्य इति पूर्वः पक्षः । सिद्धान्तस्तु—वेदान्तवाक्यैः ज्ञानानन्दैकरसाद्वितीयोदासीनस्वभाव आत्मा उपक्रमादिभिः प्रतिपाद्यते । न च क्रियासमभिहारेणेष्टगात्म-

प्रकाश

क्तं अधिकरणप्रकारं दूषयितुमनुवदति—तत्रेति । दूष्येषु मध्य इत्यर्थः । प्रत्यगात्मन एवेति । अतिरिक्तब्रह्मसत्त्वे मानाभावादिति भावः । न विषयत्वमिति । न हि स्फीतालोकमध्यमध्यासीनं कश्चिज्जिज्ञासत इति भावः । नाविवक्षितार्थत्वं वेदान्तानामाशङ्कितुं शक्यम् । "स्वाध्यायोऽध्येतव्य" इत्यध्ययनविधेरदृष्टार्थत्वेन तेन सर्वस्य वेदस्य फलवदर्थावबोधपरत्वापादनस्य "अथातो धर्मजिज्ञासा" इत्यत्र निर्णीतत्वादित्यत आह—अध्ययनेत्यादि । अविवक्षितार्थत्वे अध्ययनं व्यर्थमित्यत आह—जपमात्रेति । क्रियासमभिहारेण पौनःपुन्येन । ज्ञानानन्दादिस्वरूपमात्मतत्त्वमभिदधानानि अतएव

चन्द्रिका

तत्त्वमभिदधति तत्पराणि सन्ति युक्तमुपचरितार्थानीति वक्तु प्रत्यक्षं तु सम्भावितदोषमपौरुषेयेण निर्दोषेणागमेन बाध्यते तेन वेदान्तवेद्य शुद्धोऽहमत्यये न भातीति विषयादिसिद्धिरिति— तन्न । तथा हि शुद्धो न भातीति कोऽर्थः । किमात्मस्वर किञ्चिद्भाति किञ्चिन्न भातीति । किं वाऽऽत्मस्वरूपमेव न भ तीति । यद्वाऽनात्माऽपि भातीति । आद्ये अभासमानोंश. शरी रादिभ्यो भेदो वा कर्तृत्वभोक्तृत्वाद्यभावो वा ब्रह्मात्मभेदो व

प्रकाश

तत्र तात्पर्यवत्त्वेन विद्यमानानीत्यर्थ । प्रत्यक्षबाधाद्युक्तमित्युक्त* मित्यत आह—प्रत्यक्षं त्विति । शुक्तिरूप्यादौ व्यभिचारदर्शना- दिति भाव । बाधकत्वे हेतु —निर्दोषेणेति । तत्र हेतु —अपौ- रुषेयेणेति । नन्वत्र—"शुद्धो न भाति" इत्यादिना सिद्धान्ता- शस्यैवाग्रे दूष्यत्वेन तावन्मात्रमेवानुवदनीय, न तु पूर्वपक्षोऽपि । तथा च—"परोक्ते दूष्य एवांश" इति प्रतिज्ञाव्याकोप इति चेन्न, सिद्धान्तस्य पूर्वपक्षसापेक्षत्वेन तदननुवादे सिद्धान्तमात्रानु वादायोगात् । यद्वा सिद्धान्ते दूषिते पूर्वपक्षोऽपि दूषितप्राय इत्यभिप्रेत्य तदनुवाद । "निर्विशेषे स्वय भाते किमज्ञानावृत भवेत्" इत्यनुव्याख्यानं हृदि कृत्वाऽनूदित दूषयति—तन्नेति । चतुर्विधोऽप्यभासमानोऽश आत्मभिन्नोऽभिन्नो वा, आद्ये सत्यो मिथ्या वा इति विकल्पान् हृदि नि-

*बाधादयुक्तमित्युक्तमित्यपि पाठ.

चन्द्रिका

द्वितीयमात्राभावो वा । आत्मभिन्नस्सत्यश्चेदपसिद्धान्त । अभावद्वैत चन्यत्र निरस्तम् । मिथ्या चेन्न तत्त्वाविदकशास्त्रविद्य । आत्म-

प्रकाश

धाय क्रमेण निरस्यति—**आत्मभिन्न इति** । यद्यप्यात्मस्वरूपे अभासमानोश क इति विकल्पितेष्वात्मभिन्नत्वकल्पो नावक्लृप्यते । तथाऽपि तत्राप्यस्ति दूषणमित्यभिप्रेत्येदम्, अभासमानस्य च नात्मस्वरूपत्वमिति युक्तिसूचनाय वेति ध्येयम् । ननु भेद, अन्योन्याभाव अभेदोऽपि भेदाभाव एवेति, चतुर्णाममावरूपत्वेनात्मभिन्नानामपि सत्यत्वे न काऽपि हानि, भावद्वैतस्यैवाद्वैतविरोधित्वात् । उक्तं च—"अभावरूपा धर्मा नाद्वैतं निघ्नन्ति" इति । इत्यत आह—**अभावद्वैत** त्विति । यद्वा—भेदाभेदयोर्भावत्वेऽपि अतिरिक्तकल्पद्वयविषयत्वशङ्कासमाधानार्थमिदमिति ध्येयम् । अन्यत्रेति । न्यायामृते अशित्वादिहेतुभङ्गे । उपलक्षणमेतत् । एतावता वेदतन्मीमासयो द्वितीयाभावादिपरत्वमेव स्यात्, न त्वखण्डात्मपरत्वमि त्यात्मविद्यात्व भग्न स्यात् । तथा च 'अथातो द्वितीयाभावादिजिज्ञासा' इत्येव सूत्रविन्यासस्स्यात्, न तु ' ब्रह्मजिज्ञासा" इतीत्यपि ध्येयम् । द्वितीय निराह—**मिथ्येति** । आत्मभिन्नो द्वितीयाभावादिर्मिथ्या चेदित्यर्थ । अन्यथा अतत्त्वविदक शास्त्र प्रसज्येतेति भाव । अभेदपक्षस्तु आत्मस्वरूपमेव न भाति इति द्वितीयपक्षेऽन्तर्भूत । तथा च तत्र स्वप्रकाशत्वेनाभानायोगात् इति वक्ष्य-

चन्द्रिका

मात्रत्वे तु द्वितीयपक्षान्तर्भावः । तथाऽपि कल्पितेन भेदेनागृहीत इव भातीति चेन्न, तत्त्वतो गृह्यमाणेऽधिष्ठाने भेदकल्पनाया अगृहीतत्वारोपस्य चायोगात् । न च मिथ्याभूतेनापि तेनोपलक्षित आत्मा शास्त्रवेद्यः, स च सत्य इति वाच्यम् । स्वप्रकाशत्वेन नित्यसिद्धात्मावबोधनार्थमुपलक्षणोक्त्ययोगात् । उपलक्षण एव तात्पर्ये चाप्रामाण्यापातात् । अत एव न द्वितीयः । तस्य स्वप्रकाशत्वेनाभानायोगात । स्वप्रकाशस्याप्यविद्यावशादभानेऽविद्या-

प्रकाशः

माण एव दोषोऽत्रापि प्रसरतीति भावेनाह—आत्ममात्रत्वे त्विति । ननु द्वितीयाभावादिरात्माभिन्न एव । न चोक्तदोषः । भातस्यापि तस्याविद्यकभेदेनाभातत्वारोपसम्भवादिति शङ्कते—तथाऽपीति । आत्ममात्रत्वेन गृहीतत्वेऽपीत्यर्थः । 'अधिष्ठाने' आत्मनीत्यर्थः । भेदेति । आत्मना द्वितीयाभावादेरित्यर्थः । तन्मूलाज्ञानस्यासम्भवादिति भावः । द्वितीयाभावादिरात्मातिरिक्तो मिथ्येति पक्षे उक्तदोषोद्धारमाशङ्क्य निरस्यति—न चेति । यद्यप्येषा शङ्का "मिथ्या चेत्" इति ग्रन्थानन्तरमेव कार्या । तथाऽपि आत्ममात्रं न शास्त्रवेद्यं, येन द्वितीयपक्षोक्तदोषस्स्यादिति अभेदपक्षोक्तदोषपरिहारार्थोऽपि भवतीति न दोषः। आत्मन्येव तात्पर्यमुपलक्षण एव वेति विकल्प्य क्रमेण निरस्यति—स्वप्रकाशत्वेनेति । आत्मस्वरूपमेव न भातीति द्वितीयं निराह—अत एव न द्वितीय इति । तथा च न विषयत्वमिति भावः । भाना-

चन्द्रिका

देहेदुःखादेश्च प्रकाशो न स्यात् । तस्य चैतन्यप्रकाशाधीनप्रकाशत्वोपगमात् । एतेन—स्वप्रकाशत्वात्स्फुरति चैतन्यम् । अविद्यावृतत्वाच्च न स्फुरति । न च विरोधः । स्फुरणस्य तात्त्विकत्वादस्फुरणस्यातात्त्विकत्वात् । एवं च न कोऽपि दोषः, स्फुरत्त्वादज्ञानादिसाधकत्वस्य, अस्फुरत्त्वाद्विषयत्वस्य च सम्भवादिति निरस्तम् । स्फुरत्यस्फुरणारोपायोगस्योक्तत्वात् । न च स्वरूपचितः प्रकाशेऽपि तस्याज्ञानाविरोधित्वात् विरोधिन्याश्च वृत्तेरभावेन अविद्यावृतत्वात्सन्दिग्धत्वमिति युक्तम् । स्वरूपचितोऽज्ञानाविरोधित्वे त-

प्रकाशः

भानयोरुक्तदोषद्वयपरिहारमनूद्य अतिदेशेन दूषयति—एतेनेति । गृहीते अगृहीतत्वारोपायोगेनेत्यर्थः । न कोऽपि दोष इत्युक्तमेव विशदयति—स्फुरत्त्वादिति । एतेनेत्युक्तमेव व्यवहितत्वाद्विशदयति—स्फुरतीति । ननु शुद्धचितो भानेऽप्यविद्यावृतत्वेन विषयता युज्यते, तस्या अज्ञानसाधकत्वेन तदनिवर्तकत्वात्, अन्तःकरणवृत्तेः तन्निवर्तिकाया अद्याप्यभावात् । एकविषयकयोः वृत्तिचितोरज्ञानविरोधित्वाविरोधित्वे यथैकविषयकयोः सौरालोकज्ञानयोस्तमोविरोधित्वाविरोधित्ववदयुक्ते इत्याशङ्क्य निराह—न चेति । 'तद्वेद्ये' चिद्वेद्ये । तथा न नात्मन्यावृतत्वमिति भावः । न च सुखाद्यपि वृत्तिप्रतिबिम्बितचिता वेद्यं, न केवलया । केवला तु नाज्ञानविरोधिनीति वाच्यम् । सुखादेः ज्ञानैकसत्त्वाभावापातादिति भावः । किञ्च—

चन्द्रिका

द्वेधे दुःखादावज्ञानप्रसङ्गात्, त्वन्मतेऽयं घट इत्यपरोक्षवृत्तेरपि घटाद्यवच्छिन्नचिद्विषयत्वाच्च । श्रवणादिजनितसंस्कारसहकृतान्तःकरणवृत्तिनाश्यत्वे च, मिथ्यारूप्यादौ तददर्शनात्, सत्ये भ्रमरादिध्याननिवर्त्यकीटत्वादौ च तद्दर्शनादज्ञानस्य सत्यत्वं स्यात् । न तृतीयः, अनात्मनोऽधिकस्य भानेऽप्यात्मनोऽसन्दिग्धत्वेनाविषय-

प्रकाशः

वृत्तिसामान्यस्याज्ञानविरोधित्वम् उत वृत्तिविशेषस्य । आद्येऽपि किं परोक्षवृत्तेरुतापरोक्षवृत्तेः । नाद्यः, त्वन्मते नित्यातीन्द्रिये परोक्षवृत्तौ सत्यामप्यज्ञानानिवृत्तेः । द्वितीये त्वात्मविषया सेदानीमप्यस्तीत्याह—त्वन्मत इति । न च घटावच्छिन्नचैतन्यविषया वृत्तिरज्ञानविषयचिदविषया सती तदज्ञानाविरोधिनीति वाच्यम् । दण्डी चैत्र इति वृत्त्या चैत्राज्ञानानिवृत्त्यापातात् । द्वितीयं निरस्यति—श्रवणादीति । अन्वयव्यतिरेकपूर्वं सत्यत्वमाह—मिथ्येति । 'तददर्शनात्' तादृशवृत्तिनाश्यत्वाऽदर्शनात् । उपलक्षणं चेदम् । भ्रमकालीनाऽपरोक्षज्ञानानधिकविषयज्ञानेन कारणान्तरजन्येनाप्यज्ञाननिवृत्तावतिप्रसङ्गात्, अनधिकविषये श्रवणादिवैयर्थ्याच्चेत्यपि ध्येयम् । सत्य इति । अधिष्ठानसमसत्ताके इत्यर्थः । 'सत्यत्वं' अधिष्ठानसमसत्त्वम् । तृतीये अङ्गुलिद्वयवदात्मानात्मानावेकज्ञाने भासेते उत तादात्म्येनेति विकल्पौ हृदि कृत्वा क्रमेण निराह—अनात्मन इति । आत्मनो भानेऽपि शास्त्राविषयत्वं-संज्ञाघटीती-

चन्द्रिका

त्वतादवस्थ्यात् । अधिष्ठाने तत्त्वतः स्फुरति अनात्मारोपायोगाच्च । एतेन—यथा षड्जादयः गान्धर्वशास्त्राभ्यासात्प्रागपि स्फुरन्तः तद्रूपेणानुल्लिखिता न श्रोत्रेण व्यज्यन्ते, व्यज्यन्ते न शास्त्रवासितेन तेन, एवं वेदान्तवाक्यजन्यब्रह्मैक्याकारवासनावासितान्तःकरणेन तद्भावाभिव्यक्तिः न प्रागिति भामत्युक्तं निरस्तम् । तत्र प्रागस्फुरतः पश्चाच्च स्फुरतः षड्जत्वादिजातिभेदस्येव प्रकृते तस्याभावात् । एतेनैव—"तत्त्वमसि" इति वाक्यात् यद्यप्यात्मनो ब्रह्मत्वं ज्ञातम् । तथाऽपि वादिविप्रतिपत्त्या संशयात् तत्र जिज्ञासेति भामत्युक्तं निरस्तम् । चिन्मात्रे धर्मि-

प्रकाश.

त्याशङ्कामुक्तातिदेशेनानूद्य निरस्यति—एतेनेति । शास्त्रगम्यात्मनो निश्चितत्वेनेत्यर्थः । 'तद्रूपेण' षड्जादिना रूपेण । 'तेन' श्रोत्रेण । 'तद्भावाभिव्यक्तिः' ब्रह्मभावाभिव्यक्तिः । दृष्टान्तवैषम्यमाह—तत्रेति । ननु यथा घटे निश्चितेऽपि तज्ज्ञाने प्रामाण्यसन्देहेऽपि सः, तथाऽत्रापीत्याशङ्क्यां निरस्यति—एतेनैवेति । जातिविशेषाभावेनैवेत्यर्थः । एवं च अहंप्रत्यये शुद्धो न भातीत्येतदयुक्तमिति स्थितम् ॥ यदप्यवादि प्रत्यक्षं सम्भावितदोषमपौरुषेयेणागमेन बाध्यते इति । तदपि नेति भावेन,

यजमानप्रस्तरत्वं यथा नार्थश्श्रुतेर्भवेत् ।
ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषतः ॥

चन्द्रिका

णि निश्चिते तन्मात्रविषये संशयायोगात् । युक्तं च अपौरुषेयस्याप्यागमस्य शङ्कितनात्पर्यभ्रमरूपदोषस्य "यजमानः प्रस्तरः" इत्यादेरिव प्रत्यक्षविरोधेन प्रतीतार्थप्रच्यावनम् । उक्ता च त्वयाऽपि "तत्त्वमसि" इतिवाक्ये प्रत्यक्षाविरोधाय लक्षणा। तस्मात्परमते स्वरूपमात्रस्य स्वप्रकाशत्वेन नित्यसिद्धत्वात् अन्यस्य चाज्ञानकल्पितत्वेन अज्ञानविषयत्वायोगेन अज्ञानासम्भवात् अज्ञातो

प्रकाश

इत्यनुव्याख्यानसूचितदूषणेन निरस्यति—युक्तं चेति । किञ्चेति चार्थः। **यजमान इति** । आद्यस्य चतुर्थे तत्सिद्धिपेटिकायां "यजमानः प्रस्तरः" इत्यत्राभेदस्य बाधात्प्रस्तरशब्दलक्षिते स्रुग्धारणादौ कार्ये यजमानलक्षणगुणो निधीयत इति प्राप्ते यजमानस्य प्रस्तरवत्सूक्तवाकेन प्रहरणादिप्रकपालवच्च सर्वहुतकरणात्सर्वतन्त्रपरिलोपापातात् यजमानकार्यकरत्वं प्रस्तरेऽप्यस्तीति सिंहश्चैत्र इतिवद्गौण्या वृत्त्याऽयमभेदव्यपदेश इत्युक्तम् । तद्वदिहाप्युपचरितार्थत्वमिति । **त्वयाऽपीति** । सर्वज्ञत्वाल्पज्ञत्वविशिष्टयोरभेदस्य बाधेन चिन्मात्रलक्षणाया अङ्गीकारादिभाव ।

अतोऽविचारितविषयफलयोगादिवर्जितम् ।
अनन्तदोषदुष्टं च हेयं मायामतं शुभैः ॥

इत्यनुव्याख्यानं हृदि कृत्वोपसंहरति—तस्मादिति । अन्यस्य चेति। "पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ।" इति विवरणोक्तेरिति भाव. । अज्ञानासम्भवादिति । आवरणभू-

चन्द्रिका

विषय अज्ञाननिवृत्ति फल अज्ञानी चाधिकारी न युक्त इति शास्त्रमनारम्भणीयमेवेति, भामतीमत तावदयुक्तम् । एतेन—न मत्यग्ब्रह्मैक्य विषय, कर्तृत्वादिविरुद्धधर्मस्य सत्यत्वेनैक्यायोगात् । नापि तन्निवृत्ति प्रयोजनं, ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन सत्यस्य ज्ञानानि-

प्रकाश

ताज्ञानस्याव्रियमाणेन व्याप्तत्वात् व्यापकाऽसम्भवे व्याप्यासम्भवादितिभाव । त्रयाणा निरासे सम्बन्धोऽपि निरस्तप्राय एवेति तन्नोक्तम् । उक्त च—"योग शशनृशृङ्गयो" इति । विवरणमतमप्युक्तातिदेशेन निराह—एतेनेति । आत्मभिन्नस्सत्यश्चेदपसिद्धान्त इत्यादिदूषणजातेनेत्यर्थ । तथा हि—ब्रह्मैक्यं हि विषय इति सिद्धान्त्यभिमतम् । तच्चात्मस्वरूपमुत भिन्नम् । आद्ये तस्य स्वप्रकाशत्वेन शास्त्रवैयर्थ्यम् । न च भेदभ्रमनिरासार्थं शास्त्रम् । अधिष्ठानप्रकाश विना भेदभ्रमस्यैवायोगात् । स्वरूपे प्रकाशमानेऽप्यज्ञानविरोधिवृत्त्यन्तराभावाद्भ्रम इति त्वयुक्तम् । तद्वेद्येदु खादावज्ञानप्रसङ्गात् । द्वितीये सत्यत्वेऽपसिद्धान्त । अभावत्वेऽप्यभावद्वैतस्यान्यत्र निरासात् । मिथ्यात्वे तु न तत्त्वावेदकशास्त्रवेद्यतेत्यादि । **मत्यगिति** । जीवब्रह्मैक्यमित्यर्थ । विश्वकर्तृत्वसर्वज्ञत्वादेर्ब्रह्मधर्मस्याऽसर्वकर्तृत्वाल्पज्ञत्वादेर्जीवधर्मस्य मत्यत्वादित्यर्थ । यद्वा—कर्तृत्वभोक्तृत्वदु -खित्वादिर्जीवधर्मस्य ब्रह्मधर्मविरुद्धस्य सत्यत्वादित्यर्थ । 'तन्निवृत्ति' कर्तृत्वभोक्तृत्वादिबन्धनिवृत्ति । **ज्ञानस्येति** । यद्विषयक हि ज्ञान तद्विषयकमज्ञानमेव साक्षान्निवर्तयति । यदि कर्तृत्वा-

चन्द्रिका

वृत्त्ययोगादिति प्राप्ते, सत्यम् कर्तृत्वभोक्तृत्वादिप्रपञ्चस्य मत्यत्वे विषयादिर्न सिद्ध्यतीति । प्रपञ्चस्तु मिथ्यैव । अत एव भाष्येऽध्यासवर्णनमिति विवरणाभिप्रेतमधिकरणमपि निरस्तम् । कर्तृत्वादिविशिष्टस्य सम्भावितदोषेणातत्त्वविदकेन प्रत्यक्षानुमानादिना मिथ्याभेदे गृहीतेऽपि तात्त्विकभेदे मानान्तरविरोधाभावेन तत्त्वंपदमुख्यार्थ

प्रकाश

दिकमज्ञानकार्यं तदा तद्द्वारा तन्निवर्तकं स्यात् । न हि तत्तथेत्यर्थः । 'सत्यस्य' अज्ञानाकार्यस्येति व्याख्येयम् । 'मिथ्यैव' आविद्यक एवेत्यर्थं । तथा च कर्तृत्वादिविरुद्धधर्माणां मिथ्यात्वेनैक्यस्य विषयत्वं, अज्ञानकार्यत्वेन च ज्ञानान्निवृत्तियोगेन कर्तृत्वादिवन्धनिवृत्तिः फलमिति भावः । अतएवेति । यत कर्तृत्वादेर्मिथ्यात्वे विषयादिसिद्धिरत इत्यर्थ । अन्यथा "अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य तद्धर्माणा च अध्यास " इत्यारभ्य "मिथ्याप्रत्ययरूप. कर्तृत्वभोक्तृत्वप्रवर्तन. सर्वलोकप्रत्यक्ष " इत्यन्तभाष्य व्यर्थमेव स्यादिति भाव । यदुक्तं विषयादिसिद्ध्यर्थमध्यासवर्णनं भाष्य इति, तदप्ययुक्तमिति भावेन, "वन्धमिथ्यात्व नैवमुक्तिरपेक्षते" इत्यनुव्याख्यानं हृदि कृत्वा दूषणान्तर चाह—कर्तृत्वादीति । 'विशिष्टस्य' इति मिथ्याभेदे गृहीतेऽपीत्यन्वय । मिथ्यात्वे हेतु —अतत्त्वावेदकेनेति । तत्र हेतुः सम्भावितेति । न केवलं विशिष्टाभेदे बाधकाभाव., प्रयोजनं नास्तीत्याह । तत्त्वंपदेति । युक्त च विशिष्टैक्य-

चन्द्रिका

वात्, प्रसिद्धविशेष्यपरत्वे तु लाघवात्तदनुसारेण जीवेषु सम्भवद्गुणपूर्तिरेव प्रवृत्तिनिमित्तम्, न तु सिद्धान्त्यभिप्रेतगुणपूर्तौ तात्पर्यमिति प्राप्ते, कारणत्वेनैव बाधकेनालौकिकविशेष्यपरत्वं, ततश्च सङ्कोचकाभावात्सर्वगुणपूर्तिरेव निमित्तमिति सिद्धान्त इति सुधाभिप्रायः। अत एव न्यायविवरणे, अत्रोक्तं सुधोक्तं चाधिकरणशरीरमभिप्रेत्य "न जीव एवायं ब्रह्मशब्दः "यतो वाइमानि भूतानि जायन्ते" इत्यादिना जन्मादिकारणत्वस्यैव ब्रह्मलक्षणत्वोक्तेः" इत्युक्तम्। अनुव्याख्याने तु—मोक्षदत्वात् ब्रह्म जिज्ञास्यमित्युक्तं प्रथमसूत्रे, त

प्रकाशः

अत एवेति। सामान्यतः प्रवृत्तस्य न्यायविवरणस्याभिप्रायद्वयसम्भवात्तद्वर्णनमुभयत्र कृतमिति भावः। तृतीयाध्याये तृतीयपादस्यादौ—

कर्तव्या ब्रह्मजिज्ञासेत्युक्ते किमिति संशये।
अत इत्युदितेऽप्यस्य विशेषानुक्तितः पुनः॥
सृष्टिबन्धनमोक्षादिकर्तृत्वस्य श्रुतत्वतः।
यतो मोक्षादिदाताऽसावतो जिज्ञास्य एव वः।
इत्याह तत्परं ब्रह्म ध्यासाख्यं ज्ञानरश्मिमन्।
येनैव बन्धमोक्षस्स्यात्स च जिज्ञासया गतः।
सुप्रसन्नो भवेदीशो जिज्ञासाऽतोऽस्य मुक्तिदा॥

इत्यनुव्याख्यानाभिनेनं वर्णकान्तरमस्य सूत्रस्य तत्रास्फुटत्वाद्व्यनक्ति—अनुव्याख्याने त्विति। "तदुपपाद्यतइत्युक्तम्" इत्य-

चन्द्रिका

स्कथमिति शङ्कायामनेन सूत्रेण तदुपपाद्यतइत्युक्तम् । तत्रायं भाव—मोचकत्वेन विष्णुर्जिज्ञास्यश्चेत्, बन्धकत्वेनाजिज्ञास्योऽपि *स्यात्। न चायं न बन्धकः, जीवस्याबद्धत्वस्वबद्धत्वयोरयोगेनान्यबद्धत्वे वाच्येऽन्यस्य चेतनाचेतनस्य नेश्वराधीनत्वे पुनरीश्वरस्य बन्धकत्वेनाजिज्ञास्यता । अनधीनत्वे स्वानधीनकृताद्बन्धान्मोचकत्वं नेश्वरस्येति न जिज्ञास्यत्वमिति प्राप्ते, अप्रसन्नस्य बन्धकत्वं प्रसा-

प्रकाश

न्वयः । "मोक्षदत्वात्" इत्यादिकं "कर्तव्या" इत्यादिश्लोकतात्पर्यानुवाद । "तत्कथं" इत्यादिकं तु "सृष्टिबन्धन" इत्यादेस्तात्पर्यानुवाद । उक्तं च सुधायां—"यतो मोक्षादिदाताऽसावतो वो युष्माकं मुमुक्षूणा जिज्ञास्य एवेत्येतमर्थं जन्मादिसूत्रेणाहेत्यर्थः" इति । विष्णोरबन्धकत्वं हि त्रेधा, जीवस्याबद्धत्वेन वा, स्वबद्धत्वेन वा, जीवेशाभ्यामन्यबद्धत्वेन वा । तत्राद्यौ निराह—जीवस्येति । दुःखित्वादिदृष्टेरबद्धत्वायोगात्, दुःखाद्यापत्त्या वा आत्माश्रयापत्त्या वा स्वबद्धत्वायोगादित्यर्थ । तृतीयेऽप्यन्यश्चेतनोऽचेतनो वा, द्वयमपीशाधीनमुतानधीनमिति हृदि कृत्वा, क्रमेण निराह—अन्यस्येति । "येनैव बन्धमोक्षस्स्यात्" इति श्लोकतात्पर्यमाह—अप्रसन्नस्येति । तर्हि 'मोक्षोऽस्य यत' इति

* 'विष्णुर्जिज्ञास्य इष्टमोक्षदातृत्वात्' इति पूर्वाधिकरणसिद्धान्तानुमान 'विष्णुर्न जिज्ञास्य अनिष्टबन्धदातृत्वात्' इत्यनेन सत्प्रतिपक्षमिति भाव ।

चन्द्रिका

दहेतोर्जिज्ञासायाः कर्तव्यत्वानुकूलमेव, न तु प्रतिकूलं* । सूत्रे सृष्ट्यादिहेतुत्वोक्तिस्तु मोचकत्वसम्भावनार्थेति सिद्धान्त इति ॥

अत्र परैर्न तावदुपलभ्यमानं जगदेव ब्रह्मलक्षणं, तस्यानित्याशुद्धपरिच्छिन्नादिरूपस्य तद्विरुद्धब्रह्मलक्षणत्वानुपपत्तेः । नापि नित्यत्वकारणत्वादिर्ब्रह्मधर्मः, तस्यानुपलब्धेरिति प्राप्ते, मा भूदनुभूयमानं जगत्तद्धर्मतया तदात्मतया वा लक्षणम् । तदुत्पत्त्या तु भविष्यति, देशान्तरप्राप्तिरिव सवितुर्व्रज्याया इति सिद्धान्तितम् । तत्र,

प्रकाश.

सूत्रविन्यासस्स्यादित्यत आह—सूत्र इति ।

भाष्ये अस्पष्टत्वात् भामत्युक्तमधिकरणशरीरमनुवदति—अत्र परैरिति । अत्र "यतो वै" इत्यादिवाक्यं ब्रह्म लक्षयत्युत नेति कल्पतरूक्तसंशयो ध्येयः । दृश्यमानं जगदेव लक्षणं ब्रह्मण उत नित्यत्वादिस्तद्धर्मः । आद्यआह—न तावदिति । 'तस्य' जगतः । द्वितीयमाशङ्क्याह—नापीति । प्रसिद्धं हि लक्षणं भवति, नात्यन्ताप्रसिद्धमिति भावः । न जगद्ब्रह्मलक्षणं, किंतु तत्प्रति कारणत्वमिति लक्षणमुपपादयति—मा भूदिति । भेदमुपेत्याह—तद्धर्मतयेति । 'तदात्मतया' ज्ञानानन्दादिवत्तदैक्येन । तदुत्पत्त्या त्विति । जगत्तदुत्पन्नत्वेन स्वकारणं ब्रह्म लक्षयति ज्ञापयतीति, कार-

* 'प्रतिकूल' इत्यन्तएव 'सिद्धान्त' । 'सूत्रे' इत्यादिकं तु यथास्थितसूत्रन्याससमर्थनपरं न सिद्धान्तघटकम् । बन्धनिवृत्तिहेतुप्रसादात्यन्ताभावेन सापाधिकं पूर्वं क्वनुमानमिति हृदयम् ॥

चन्द्रिका

जिज्ञास्यस्येतरव्यावृत्त्यर्थं लक्षणसूत्रे अस्मद्रीत्या अव्यावृत्तिपूर्वपक्षस्यैवोचितत्वात् । अनित्यादिरूपस्य शब्दादेर्नित्यादिरूपाकाशादिलक्षणत्वदर्शनाच्च । जगत इव कारणत्वस्याप्यनात्मतयाऽऽत्मविरुद्ध-

प्रकाशः

त्वं तु भवति लक्षणमिति भावः । 'व्रज्यायाः' गतेरित्यर्थः । "व्रजयजोर्भावे क्यप्" । सूत्रानानुगुण्येन पूर्वपक्षं तावन्निराह—जिज्ञास्यस्येति । लक्षणं नाम सजातीयविजातीयव्यावर्तकम् । सूत्रे तदुक्तिरितरव्यावृत्त्यर्था । तथा च यथाऽश्वादिविवेकेन गोरज्ञाने तज्ज्ञानाय सास्नादिमत्त्वं लक्षणमुच्यते, तथा ब्रह्मणो जीवप्रधानाद्यविवेकेन जीवादावपि ब्रह्मत्वबुद्धौ प्रसक्तायां, तद्व्यावृत्त्यर्थं लक्षणमिति, निरस्यस्य सूत्रावतारिकारूपस्य पूर्वपक्षस्याव्यावृत्तिरूपस्यैव वाच्यत्वात् सूत्राननुगुणः पूर्वपक्षइत्यर्थः । तादृशपूर्वपक्षोऽशक्य इत्येतन्निराह—अस्मद्रीत्येति । अयुक्तश्च पूर्वपक्ष इत्याह—अनित्येति । गुणेन्द्रियिकादिरूपस्येत्यादिपदार्थः । पृथिवीत्वादिः नित्यादिरूपस्यानित्यादिरूपपृथिवीलक्षणत्वदर्शनादित्यादिपदार्थः । तद्विरुद्धधर्मकमपि जगद्ब्रह्मलक्षणं स्यादिति भावः । सिद्धान्तोऽप्ययुक्त इत्याह—जगत इति । आत्मविरुद्धेति । अनित्यत्वपरिच्छिन्नत्वरूपत्वादिति भाव । अत्र यद्यपि जगद्गतमुत्पत्त्यादिकं लक्षणं चेत्सूत्रे 'यतः' इति पदमयुक्तम् । "न हि 'यतश्चैत्रजन्म स मैत्र' इत्युक्ते, चैत्रनिष्ठजन्म मैत्रलक्षणं भवति" इति केषांचित्पक्षे वक्ष्यमाणो दोष इहापि तुल्य. । तथाऽपि कल्पतरौ 'उत्पत्त्या'

चन्द्रिका

स्वभावत्वाच्च । जिज्ञास्यत्वेनाद्यसूत्रे प्रकृतस्य निर्विशेषब्रह्मणो भ्रमाधिष्ठानत्वेनाकारणत्वाच्च । अधिष्ठानत्वस्यैव विवक्षाया तु श्रुतिसूत्रयोर्जन्मोक्त्ययोगात् । देशान्तरप्राप्तिर्सूर्यगत्यनुमापकत्वेऽपि तल्लक्षणत्वा-*भावाच्च । न चात्र सूत्रे, "यतो वे" इत्यादिश्रुतौ वा उत्पत्त्यादिकमद्वितीये ब्रह्मणि लिङ्गत्वेनोच्यतइति त्वयाऽपि स्वीकृतम् ॥

प्रकाश

इत्यस्य कारणपरत्वेन व्याख्यानात् प्रकारान्तरेण दूषणमुक्तम् । एव सिद्धान्ते पूर्वसूत्रमाकृत्य चाह—जिज्ञास्यत्वेनेति । जन्मोक्तीति । न ह्यधिष्ठानाद्भ्रमस्तं जायतइत्युच्यतइति भाव । यदत्र यश्चिदाह—लक्षणस्योद्देशपूर्वकत्वादिह चोद्देशाभावान्न लक्षणसूत्रमिदमिति, तन्न, "ब्रह्मजिज्ञासा" इति पूर्वसूत्रएव तस्योद्देशात् । न च तत् षष्ठ्यन्तत्वाज्जिज्ञासाया कर्मापेक्षतया न लक्षणोद्देशसमर्पकमिति वाच्यम्, 'प्रमाणप्रमेय" इत्यादिगौतमसूत्रे षष्ठ्यन्तनिर्दिष्टानामप्युद्देश्यत्वदर्शनात् । 'नाममात्रेण' इति मात्रपदेन लक्षणस्यैव व्यवच्छेद्यत्वात् । अत एव "प्रथमोद्दिष्टस्य प्रमाणस्य

* 'सूर्यगत्यनुमापकत्वेऽपि' सूर्यगतिप्रतीतिजनकप्रतीतिविषयत्वेऽपि, 'तल्लक्षणत्वाभावात्' सूर्यगतित्वरूपलक्ष्यतावच्छेदकसम नियतत्वात्मकसूर्यगतिलक्षणत्वाभावादित्यर्थ । तत्प्रतीतिजनकप्रतीतिविषयरूपसाकातिकलक्षणपरत्व तु नास्य सूत्रस्योचितम्, तथाविधलक्षणस्य विचारप्रतिज्ञाऽनन्तरसूत्र जिज्ञासित्वाभावेन तदुक्तरसगतत्वापत्तेरिति ध्येयम् ॥

चन्द्रिका

केचित्तु—न तावज्जन्मादयो विशेषणत्वेन लक्षयन्ति, विशेषणस्य स्वाश्रये सर्वविशेषधर्मव्यावर्तकत्वेन एकस्मिन्नेकविशेषणायोगेनानेकविशेषणाश्रयस्य ब्रह्मणोऽनेकत्वप्रसङ्गात् । 'चैत्रश्श्यामो युवा लोहिताक्षः' इत्यादौ तु मानान्तरवशादैक्यम् । न

प्रकाश

लक्षणमाह " इत्यादितदीयोक्तिः, प्रमाणलक्षणटीकायामपि "–'प्रमाणानां' इत्युद्देशे सिद्धे प्रमाणसामान्यलक्षणमाह " इत्युक्तिः । सूत्रे 'यतः' इत्युक्ते 'तद्ब्रह्म' इत्यवश्यमनुषञ्जनीयत्वाच्च न कोऽपि दोषः॥

यथाश्रुतं रामानुजभाष्यमेवानुवदति—केचित्त्वित्यादिना । " यतो वै " इत्यादिवाक्यात् ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते न वेति संशयोऽत्र द्रष्टव्यः । जन्मस्थितिप्रलया विशेषणत्वेन लक्षयन्ति उतोपलक्षणत्वेन । नाद्य इत्याह—न तावदिति । विशेषणं हि स्वेतरधर्मव्यावर्तकम् । उक्तं च द्वितीयस्य तृतीयपादाद्यनये—

विशेषणं व्यवच्छेत्तृ विशेष्यव्यापि नोच्यते ।

इति । तथा च जन्मादीनामैकाधिकरण्यायोगेन ब्रह्मविशेषणान्येतानि ब्रह्मणो नानात्वमापादयेयुरित्यर्थः । ननु 'चैत्रश्श्यामो युवा लोहिताक्षस्समपरिमाणः' इत्यत्र विशेषणबहुत्वेऽप्येक एव चैत्रः प्रतीयते । एवमत्राप्येकमेव ब्रह्म भवतीत्यत आह—चैत्र इति । मानान्तरेति । प्रत्यक्षेणैक्यप्रतीतेरेकस्मिन्नपि तत्रानेकविशेषणानामुपसंहारः । अन्यथा तत्राप्यनेकत्वमपरिहार्यम् । अत्रत्वेभिरेव लक्षणैर्लिलक्षयिषितत्वेन ब्रह्मणः

चन्द्रिका

नात्रापि ब्रह्मशब्दैक्यात् ब्रह्मैक्यम्*, 'खण्डो मुण्ड पूर्णशृङ्गो गौ' इत्युक्तेऽज्ञातगोव्यक्ते पुसो गोव्यक्तिबहुत्वस्येवात्रापि ब्रह्मव्यक्तिबहुत्वस्य प्रतीतिप्रसङ्गात् । नाप्युपलक्षणतया, उपलक्ष्याका रान्तराप्रतीते । तस्माज्जन्मादिवाक्य न ब्रह्म लक्षयितु शक्त मिति प्राप्तेऽस्तु नावद्विशेषणत्वम् । न च ब्रह्मणोऽनेकत्वप्रसङ्ग, विशेषणाना स्वविरोधिधर्मव्यावर्तकत्वात् । जन्मादीना तु काल- भेदेनाविरोधात् । उपलक्षणत्व वाऽस्तु, बृहत्यर्थस्य पूर्णत्वस्योपल

प्रकाश

प्रमाणान्तरेणैक्य नावगतमिति व्यावर्तकभेदेन ब्रह्मबहुत्वमवर्जनीय मिति भाव । खण्ड इति । गोपदैक्येऽपि खण्डत्वादिव्यावर्तकभेदेन गोव्यक्तिबहुत्वप्रतीतिरिवात्रापि 'जायन्ते जीवन्ति प्रयन्ति' इत्या दिव्यावर्तकभेदेन ब्रह्मव्यक्तिबहुत्वप्रतीतिस्स्यादित्यर्थ । द्वितीय निराह- नापीति । उपलक्षणानामेकेनाकारेण प्रतिपन्नस्य केन चिदाका रान्तरेण प्रतिपत्तिहेतुत्व दृष्ट, 'यत्राय कासार स देवदत्तकेदार' इत्यादिषु । तथा च तद्वत्स्मरतेि आकारान्तर न प्रतीतमिति नोपलक्षणत्वमिति भाव । स्वविरोधीति । स्वविरोध्यनेकविशे षणत्व हि भेदमापादयति । खण्डतादयो हि विरोधादेव गो व्यक्तिभेदमापादयन्ति । जन्मादीना कालभेदेनाविरोधादेकविशेष णत्व युक्तमिति भाव । पूर्णत्वस्येति । तथा च यत्पूर्णं तज्ज न्मादिकारणमित्युपलक्षणत्व जन्मादेर्युक्तमिति भाव ।

* ब्रह्मैकम् इत्यपि पाठ

चन्द्रिका

स्यत्वादिति सिद्धान्तयन्ति। तन्न, पूर्वपक्षानौचित्यस्योक्तत्वात् । किञ्च—"जन्माद्यस्य" इत्यत्र * जन्मादिशब्देन कार्यावस्थागतोत्पत्त्यादिविवक्षायां तद्भेदेन तदनाश्रयब्रह्मभेदाशङ्का, सूत्रे 'यतः' इति पदं चायुक्तम् । न हि 'यतश्चैत्रजन्म समैत्रः' इत्युक्ते चैत्रनिष्ठं जन्म मैत्रलक्षणं भवति, किन्तु—मैत्रगतं कारणत्वम् । कारणगतानां 'यतः येन' इति श्रुतिपञ्चम्याद्युक्तानां जन्मादिकारणत्वानां वित

प्रकाशः

उक्तत्वादिति । "जिज्ञास्यस्येतरव्यावृत्त्यर्थं लक्षणसूत्रे"† इत्यादिनोक्तत्वादित्यर्थः । प्रकारान्तरेण पूर्वपक्षं निराह—किञ्चेति । कार्यगतोत्पत्त्यादिकं ब्रह्मलक्षणमुत, तत्कारणत्वं ब्रह्मगतमेव तल्लक्षणमिति विकल्प्याद्यमाह—कार्येति । आशङ्केति । 'अयुक्ता' इति योज्यम् । 'यतः' इति पदायोगमुपपादयति—न हीति । द्वितीयमनूद्य निराह—कारणेति । ब्रह्मगतानामित्यर्थः ।

* 'इत्यत्र' श्रीभाष्यस्थे "न तावज्जन्मादयो विशेषणत्वेन ब्रह्म लक्षयन्ति" इति वाक्य इत्यर्थः ॥

† 'जिज्ञास्यस्य' श्रौतब्रह्मपदवाच्यस्य, 'इतरव्यावृत्त्यर्थं' ब्रह्मपदवाच्यभूताजिज्ञास्यजीवादिव्यावृत्तिसिद्ध्यर्थं, न तु अतिव्याप्तिपरिहारार्थमित्यर्थः । तेन—'अव्याप्तेरतिव्याप्तिरूपाया लक्ष्ये लक्षणसम्भवोपजीवितयाऽन्तरङ्गत्वेनासंभवशङ्काया एव प्रथम वारणीयत्वात्' इति पूर्वपक्षानौचित्योद्धारो भावानवबोधनिबन्धन, लक्षणातिव्याप्तिपूर्वपक्षस्यानाकरणात् । प्रत्युत जिज्ञास्यमात्रवृत्तिलक्ष्यतावच्छेदकाज्ञाने तदवच्छेदेन लक्षणसम्भवस्यैव दुर्बोधतया लक्षणसंभवोपजीव्यलक्ष्यतावच्छेदकपरिचयार्थमजिज्ञास्यव्यावृत्तिपूर्वपक्षनिरासप्राथम्यस्यैव न्याय्यत्वादिति ध्येयम् ॥

चन्द्रिका

क्षायामपि, त्वन्मते सृष्ट्यादिकारणत्वानामेकस्मिन्नेवोपादाने दर्शनान्न भेदशङ्का युक्ता । सिद्धान्ते कालभेदेनाविरोधोक्तिश्चायुक्ता, लयादिकाले "सर्गाद्या भावशक्तयः" इत्यादिस्मृतिसिद्धायास्सामर्थ्यरूपायास्सृष्ट्यादिकारणतायास्सत्त्वात् ॥

प्रकाशः -

यदपि सिद्धान्ते जन्मादीनां कालभेदेनाविरोधोपपादनं, तदपि तदीयभाष्योदाहृतस्मृतिविरोधादयुक्तमित्याह—सिद्धान्तइति ।

शक्तयस्सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥

इति स्मृतिसिद्धाया इत्यर्थः । 'अचिन्त्यज्ञानगोचराः' अतर्क्यप्रमितिसिद्धाः । 'सर्गाद्याः' सर्गादिगोचराः* । 'भावशक्तयः' वस्तुशक्तयः । 'ब्रह्मणो वस्तुशक्तयः' इति निर्देशः 'ब्रह्मणस्तादात्म्यं' इति वत् । यद्वा—ब्रह्मणः 'भावशक्तयः' वस्तुशक्तयः, ब्रह्मणोवस्तुत्वप्रयुक्ताः निरुपाधिकाः शक्तय इत्यर्थः । यद्वा-भावशब्दः स्वभावपरः । स्वाभाविक्यः शक्तय इत्यर्थः" इति श्रुत-

* एतेन—सर्गादीनां शक्तितादात्म्यभ्रमेण दूषणाभिधानमिति केषांचिद्विलपनं भ्रममूलकत्वान्निरस्तम्, सर्गादीनां शक्तिरूपत्वाभावेऽपि तत्कारणत्वस्य लक्षणत्वे तस्य शक्तिरूपत्वेन कालभेदेनाविरोधोक्त्यसाङ्गत्यस्यापरिहारात् । शक्तीनामतीन्द्रियत्वेन कार्यैकोन्नेयत्वेऽपि सार्वदिकत्वानपायात् । न हि कादाचित्कोन्नेयं कादाचित्कमिति नियमः । क्षित्यादिकार्योन्नेयत्वेन ब्रह्मणोऽपि कादाचित्कत्वापत्तेरिति ॥

प्रकाशः

प्रकाशे व्याख्यातत्वेन स्वाभाविक्याः सर्वदा सत्त्वादिति भावः। एतेन—यत्कश्चिदाह "यतो वै" इत्यादिवाक्योक्तं जन्मादिकं ब्रह्मणो लक्षणं भवितुमर्हति न वेति संशये, तस्य जगन्निष्ठत्वेन ब्रह्मासम्बद्धत्वात्, "सदेव सोम्य" "आनन्दाद्ध्येव, विज्ञानाद्ध्येव" इत्यादिवाक्यान्तरेषु मदानन्दादेरपि जन्मादिहेतुत्वोक्त्या इदमित्थमिति शृङ्गग्राहिकया लक्ष्यनिर्धारणाशक्त्वाच्च न लक्षणं भवितुमर्हतीति प्राप्ते, तदसम्बद्धस्यापि चन्द्रस्य शाखाग्रवत्ताटस्थ्येन जन्मादिकं लक्षणं भवितुमर्हति, सदादिशब्दानां च कथञ्चिद्ब्रह्मशब्दिते शिवएव पर्यवसानादित्यादिसिद्धान्त इति, तन्निरस्तं, पूर्वसूत्रे "परीक्ष्य लोकान्" इत्यादिवाक्यमुदाहरतस्तवेहान्योदाहरणस्यानुचितत्वेन यज्ज्ञानार्थं गुरूपपत्तिस्तद्ब्रह्मेत्येव लक्षणसूत्रत्वौचित्यात्। अत्रेव पूर्वत्रापि ब्रह्मजिज्ञासापदघटितसूत्रानुगुण्येन तद्घटितस्यास्यैव उदाहरणत्वे तत्रैव श्रुतं जन्मादिकं लक्षणं न वेति चिन्तायास्सङ्गतत्वाच्च। सूत्रे 'यत' इति कारणत्वस्याप्युक्त्या जन्मादिमात्रे चिन्ताया अयुक्तत्वाच्च। किञ्च—सूत्रे लक्षणत्वोपपादकन्यायस्यानुक्त्या लक्षणीभूतजन्मादिकारणत्वमात्रस्यैवोक्त्या एवंविधपूर्वपक्षस्य सूत्राननुगुण्याच्च। अस्मद्रीत्या ब्रह्मणि तदसिद्धिपूर्वपक्षस्यैव सूत्रानुगुण्याच्च। लक्ष्यासम्बद्धस्य मुख्यलक्षणत्वाभावेन सूत्रस्य गौणार्थत्वापाताच्च। ताटस्थ्यस्याग्रे निरसिष्यमाणत्वाच्चेत्या

चन्द्रिका

यादवप्रकाशीये तु—"तद्विजिज्ञासस्व" इति वाक्ये साङ्ख्याभिमतप्रधानस्यापि ब्रह्मशब्दार्थत्वाज्जिज्ञास्यत्वमिति शङ्कानिरासाय जन्मादिसूत्रमित्युक्तम्। तत्र न तावत्प्रधानस्यैव जिज्ञास्यत्वशङ्कानिरासकं सूत्रम्, जीवस्यापि ब्रह्मशब्दार्थत्वेन जिज्ञास्यत्वमिति शङ्कायाः, कारणत्वाभावेन तन्निरासस्य च संभवात्। जीवप्रधानादीनां जिज्ञास्यत्वशङ्कानिरासार्थत्वं तु सूत्रस्यास्माकमिष्टम्॥

प्रकाश

सूक्ष्मम्॥ यदपि—सकलकारणवाक्यस्थसदानन्दादिशब्दानां शिव एव पर्यवसानमिति वल्गनं, तदप्याद्युदाहृतानेकमानविरुद्धत्वात्, "पत्युरसामञ्जस्यात्" इति सूत्रकृता निरभिप्यमाणत्वेनाज्ञत्वपारतन्त्र्याद्यनेकन्यायविरुद्धत्वाच्च अपेशलम्। विस्तरस्तु गुरुपादकृतपरतत्त्वप्रकाशिकादौ ध्येय इति॥

प्रधानस्यैव जिज्ञास्यत्वशङ्कानिरासकमुत जीवस्यापीति विकल्प्याद्यं निराह—तत्रेति। कुत इत्यत पूर्वोत्तरपक्षन्यायस्य जीवेऽपि साम्यादित्याह—जीवस्यापीति। द्वितीयमभ्युपगच्छति—जीवेति। सूत्रस्येति। "य आत्मा" इति जिज्ञास्ये जीवसाधारणात्मपदात्, जात्यादेरिव न प्रधानस्यापि संदेहनिविष्टत्वमिति हृदयम्। यद्वा न्यायविवरणटीकायां—"यद्वा 'जीव एव' इति जात्यादेरप्युपलक्षणम्। एवशब्दस्तु भगवन्तं व्यावर्तयति" इत्यादिना जीवजात्यादेरपि व्यावर्त्यतया पूर्वपक्षस्याप्युक्त्या तदनुरोधेन पक्षान्तरमभिप्रेत्यैवमुक्तिरिति ध्येयम्॥

चन्द्रिका

यच्चोक्तं परैः—'जन्मादि' इत्यत्रोत्पत्तिस्थितिभङ्गमेवोच्यते, न त्वन्यत्, "यतो वै" इत्यादिश्रुत्यनुसारादिति, तन्न, "यतो वै" इत्यत्र चतुर्णां, "तमेवैकं जानथ" इत्यादौ "यस्मिन् द्यौः" इति स्थित्यादीनामेकैकस्यैव श्रवणात् । न च 'अभिसंविशन्ति' इत्येतदपि* प्रलयपरम्, 'प्रयन्ति' इत्यनेन पौनरुक्त्यापत्त्या† तस्य मोक्षपरत्वात्।

प्रकाशः

पराभिमतं सूत्रार्थमपि निरस्यति—यच्चोक्तमिति । 'श्रुत्यनुसारात्' इति तात्पर्यानुवादः । उक्तं च तद्भाष्ये—"जन्मस्थितिभङ्गं समासार्थः" इति । "—'यतो वै' इत्यादिवाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात्" इति च । चतुर्णामिति । "अभिसंविशन्ति" इत्यनेन मोक्षोक्तेरिति भाव. । तमेवेति । तस्याप्यत्र विषयत्वादुदाहृतम् ।

---

* 'अभिसंविशन्तीत्येतदपि'—न केवलं 'यत्प्रयन्ति' इत्यन्तमेव, किंतु 'अभिसंविशन्ति' इत्येतदपि प्रलयपरमित्यपेरर्थः । "यत्प्रयन्त्यभिसंविशन्ति" इत्यन्तमेकमेव वाक्यं प्रलयपरम्, न तु "यतो वाइमानि भूतानि जायन्ते, येन जातानि जीवन्ति" इत्यन्तमिव वाक्यद्वयम्, तत्र 'यतः, येन' इति यच्छब्दस्य द्विरिव, अत्र 'यत्' इत्यस्य द्विरश्रवणात् । अन्यथा प्रायपाठविरोध इति भाव ।

† 'पौनरुक्त्यापत्त्या'—उदाहृतवाक्ये 'प्रयन्ति, अभिसंविशन्ति' इत्यनयोस्तिङ्न्तताश्रयणेन प्रलयपरत्वे एकेनोक्तार्थस्यैवान्येनोक्ते शब्दत पुनरुक्ते, 'प्रयन्ति' इत्यस्य शत्रन्ततामाश्रित्य लयोन्मुखानीत्यर्थस्याभ्युपगमे 'अभिसंविशन्ति' इत्यनेन लयेऽभिहिते लयात्प्राक् तदुन्मुखत्वस्य विनाऽप्यभिधान लाभादर्थत पुनरुक्तेश्चापत्तेरित्यर्थ । इतरथा उत्पत्तिस्थितिवाक्ययोरपि उत्पत्त्यभिमुखानि स्थित्यभिमुखानीति वक्तव्य स्यादिति हृदयम् ।

चन्द्रिका

न च 'प्रयन्ति' इत्यनेन सुषुप्तौ ब्रह्मप्राप्तिरुच्यते, तथाऽपि चतुष्ट्वा-परिहारात् । जगतो जन्माङ्गीकारेऽनित्यत्वापत्त्या मिथ्यात्वासिद्धेरुक्तत्वाच्च । तस्मात्सृष्ट्याद्यष्टकमेव * जन्मादिपदार्थ ।

प्रकाश

'तथाऽपि' इत्यभ्युपगमवाद । यदपि तद्गुणसंविज्ञानबहुव्रीहिमाश्रित्य जगतो जन्माङ्गीकरण, तदपि व्याहतमित्याह—जगत इति । तथा च स्थितिभङ्गविरोपेयाविनि भाव । उक्तत्वाच्चेति । जिज्ञासाधिकरणे विवरणाभिमतनित्यानित्यवस्तुविवेकखण्डनग्रन्थे (पु १३२) इति भाव । 'तस्मात्' श्रुत्यनुसारादित्यर्थ । एतेन केषा चित्पक्षोऽपि निरस्त । यथाक्त श्रीभाष्ये—"जन्मादीति सृष्टिस्थितिप्रलयम्" इति । एतेनैव आद्यस्य चतुर्मुखस्य जन्म यत ' इति मत, 'आदिपदेन स्थितिमात्र गृह्यते' इति मत च निरस्तम्, सर्वस्य श्रुत्यननुसारात् । एतेन—"अन्ये तु—'जन्मादि' इति तद्गुणसंविज्ञानबहुव्रीहिमुपादाय सृष्टिस्थितिभङ्ग समासार्थ इति व्याचुर्वते" इत्यादिसुधावाक्य विवृत भवति ।

---

* न चैव 'प्रयन्ति अभिसंविशन्ति' इत्यनयो क्रमेण प्रलयमाक्षपरत्वेन वाक्यभेद द्वि यत् इत्यस्य श्रवणापत्ति, उत्पत्तिस्थितिवाक्यया यच्छब्दाथस्य भिन्नभिन्नकारकतया तद्बोधकविभक्त्यन्ततया द्वि श्रवणावश्यम्भावेऽपि अत्र क्रियाद्वय प्रयपि यच्छब्दा थस्य कर्मत्वन द्वि श्रवणप्रयाजककारकभेदाभावन सकृच्छ्रुतस्यैव तस्यावृत्त्या तन्त्रेण वा क्रियाद्वयान्वयप्रतियोगिसमर्पकतोपपत्तेरिति ध्येयम् ।

चन्द्रिका

"यतो वे" इत्यत्र सृष्टिस्थितिप्रलयमोक्षाणाम्, "य आत्मानमन्तरो गमयति"

प्रकाश

तत्रानुदाहृतत्वात्ता एव श्रुतीराह—यतो वा इत्यादिना । य आत्मानमिति । 'आत्मान' जीवं तदभिमानिचतुर्मुखं वेत्यर्थः । नन्वत्र विचारविधेरश्रवणान्नेदं विषयवाक्यम्, तद्विधिवाक्यस्थलक्षणानामेवेह सूत्रे सङ्ग्रहात् । उक्तं च सुधायाम्—"न चैकमेव सर्वत्र जिज्ञासाविधायकश्रुतिषु लक्षणं श्रूयते, किन्त्वासु ब्रह्मजिज्ञासाविधात्रीषु श्रुतिषु क्वचित्सृष्टिः, क्वचित्स्थितिरित्यष्टकं जिज्ञास्याद्धरेर्विश्वस्योक्तमित्यनेकलक्षणोक्त्युपयोग" इति । अत्रापि चाग्रे 'विचारविधायकनानावाक्य" इत्यादि वक्ष्यति । तथा च कथमेतदुदाहरणम् । उच्यते । लक्षणसूत्रे श्रुतिवाक्यप्रसिद्धलक्षणस्य सङ्ग्रहो न विधिवाक्यस्थस्येति नियमः । अत एव तत्त्वप्रदीपे "—'विवेश भूतानि चराचराणि' इत्यर्थानियमनं" इत्यादिना तादृशवाक्यान्येवोदाहृतानि । उदाहृतसुधावाक्यादिकं तु सम्भाविताभिप्रायम् । यद्वा—अन्तर्यामिब्राह्मणोपक्रमे "यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति ब्रह्मवित्स लोकवित्" इत्याद्यर्थवादात्तज्जिज्ञासाविधेरुन्नयनाद्विचारविधिवाक्यमेवैतदिति न दोषः *।

* अविधिवाक्योक्तानामपि लक्षणत्वे विधिवाक्यविचारपरपूर्वाधिकरणतद्विषयवाक्याभ्यां सङ्गत्यभावरूपो दोषो नेत्यर्थः ।

चन्द्रिका

"त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो" इत्यादौ नियमनादीनामप्युक्तेः । सूत्रकृतैव स्कांदेऽष्टकर्तृत्वस्य लक्षणत्वेनोक्तेश्च । न च नियत्यादीनां जन्मादावन्तर्भावः, स्वस्वव्यापारेषु प्रवृत्त्यादिरूपाणां नियत्यादीना विनाशादेरिव जन्मादिमत्त्वेपि जन्मादिभ्यो भेदानुभवात् ।

प्रकाश.

त्वमिति । यतो बन्धादिदाता, अतो नोऽस्माकं 'मतः' विचारित इत्यर्थमत्र विषय इति भावः । इयं च श्रुतिगीतातात्पर्योदाहृतश्रुतिरिति ध्येयम् । स्कान्दइति । "उत्पत्तिस्थितिसंहारा" इतिस्मृत्येति भावः । ननु "अन्येषामपि भावविकाराणा त्रिष्वेवान्तर्भाव." इति परभाष्ये अन्तर्भावोक्तेर्नियत्यादीनां जन्मस्थितिभङ्गोपेतत्वेन तेनैव गृहीतिर्न पृथग्वाच्यतेत्याशङ्क्याह—न चेति। नियतिस्वरूपोक्ति "स्वस्वव्यापारेषु प्रवृत्ति" इति । ज्ञानाज्ञाने तु व्यक्ते । सुखदुःखानुभवो बन्ध *, नित्यानन्दानुभवो मोक्ष इति ध्येयम् । यथा विनाशस्य जन्मस्थितिमत्त्वेपि ताभ्या भङ्गस्य पार्थक्यं, यथा वा स्थितेर्जन्मभङ्गवत्त्वेऽपि ताभ्यां पार्थक्यं, तथा नियत्यादीना तत्रितयवत्त्वेऽपि तेभ्योऽपि भेदानुभवादित्यर्थः ।

---

* सुखदुःखानुभवरूपबन्धस्योक्तत्वेन सुखदुःखदत्व लब्धम्, तयोर्ज्ञानाज्ञानसत्त्वेन पृथगुक्तत्वानपेक्षत्वात् ।

चन्द्रिका

मोक्षस्य बन्धध्वंसत्वे नोत्पत्तिरपि प्रागभावनिवृत्तिः स्यात्*। ननूत्पत्ति प्रागभावस्य ध्वंसो न तूत्पद्यमानस्येति नेत्तर्हि मोक्षोऽपि बन्धस्य ध्वंसो न तु बद्धस्य। मोक्षस्य परमपुरुषार्थतया पृथग्वाच्यत्वाच्च। अज्ञानं तु न बन्धः, किन्तु बन्धकम्।

प्रकाशः

मोक्षस्य भङ्गभेदमाशङ्क्याह—मोक्षस्येति। तथा च भङ्गेनैवोत्पत्तेरपि ग्रहणं स्यादिति भावः। उत्पद्यमानस्येति। तथा च तद्भङ्गो भङ्गपदार्थोऽन्यो वाच्य इति भाव। बद्धस्येति। बद्धस्य विशिष्टस्य पदार्थान्तरत्वेन तद्ध्वंसोऽप्यतिरिक्तो नाशपदार्थ इति वा, बद्धपद धर्मिसामान्यपरं, तद्ध्वंसो नाशपदार्थोऽन्यो वाच्य इति वाऽभिप्रायः। भावरूपोऽप्यावश्यक इत्याह—मोक्षस्येति। अनिष्टनिवृत्तेः पुमर्थत्वेऽपीष्टप्राप्तेरेव मुख्यपुरुषार्थत्वमिति भाव। अज्ञानबन्धयोर्भेदमाह—अज्ञानं त्विति।

---

* अद्वैतसिद्धान्ते सत्कार्यवादाङ्गीकारात्प्रागभाव एव नास्तीति न तन्निवृत्तित्वमुत्पत्तेर्युक्तमिति नायं दोष इति चेत्तत एव कार्यस्य निश्शेषनाशस्य दुरुपगमत्वात्ध्वंसोऽपि न वक्तव्य स्यात्। सत्कार्यवादे कार्यस्य कारणात्मना स्थित्यवश्यम्भावेऽपि कार्यात्मना ध्वंसोऽस्त्वयेति चेद्धन्त तर्हि कार्यात्मना प्रागभावोऽप्यस्तु, कारणात्मना प्रागभावाभावस्यैव सत्कार्यवादापेक्षितत्वेन कार्यात्मना प्रागभावाङ्गीकारस्य तदविरोधित्वात्। श्रुत्युक्तत्वाद्ध्वंसस्य स्वीकार्यत्वे तु, "आत्मा वा इदमेव एवाग्र आसीन्नान्यत्किंच न मिषत्" इत्यादिश्रुत्युक्तत्वात्प्रागभावोऽपि स्वीकार्य एवेतिदिक्।

चन्द्रिका

ननु तथाऽपि नियमनज्ञानादीन् 'अस्य' इत्येनेन विवक्षित्वा तेषामुत्पत्त्यादिके जन्मादिपदेनोक्ते नियमनादीन् प्रति जगत्प्रतीव ब्रह्म कारणं सिद्ध्यति, किं जन्मादीत्यत्र तद्ग्रहणेनेतिचेन्न, 'अस्य' इत्येनेन निर्दिष्टधर्मिभूतजगत्सम्बन्धार्थं धर्माणां नियमनादीनां धर्मनिर्देशकेन जन्मादिपदेनैव ग्राह्यत्वात्। न चेत्परमते 'अस्य' इत्येनेन भङ्ग विवक्षित्वाऽस्योत्पत्त्यादिके जन्मादिपदेनोक्ते भङ्गस्य ब्रह्म कारणं सिध्यति, किं 'जन्मादि' इत्यत्र भङ्गग्रहणेनेति स्यात्।

प्रकाशः

तथाऽपीति । जन्मादीनामष्टानां भेदे सिद्धेऽपीत्यर्थः । यथा 'अस्य' इत्येनेन जगतः परामर्शः, तथा पञ्चधर्मानपि परामृश्यास्य जन्मादित्रयं भवतीत्युक्ते जगत्कारणं ब्रह्म यथा सिध्यति, तथा नियत्यादिकारणं सिध्यतीत्यर्थः अस्येत्येनेनेति । अत्र 'अस्य' इति धर्मिनिर्देशकं, 'जन्मादि' इति धर्मनिर्देशकम् । तत्र नियमनादीनां धर्माणां धर्मिनिर्देशकेनैव ग्रहणे जन्मादित्रितयसम्बन्धो जगतो नियमनादीनां न सिद्ध्यति, तथाऽपि जगतो नियमनादिधर्माणां च सम्बन्धो नोक्तः स्यात्। अतो धर्मनिर्देशकेन तेषां ग्रहणे तु जगत्सम्बन्धो जन्मादित्रयस्येव नियत्यादीनामपि सिद्ध्यतीत्येवं ग्राह्यमित्यर्थः । अस्येति। 'अस्य' इत्युक्तस्येत्यर्थः । स्थितावप्ययं प्रसङ्गो बोध्यः । भङ्ग मात्रे तदुक्तिस्तु मात्रादिपदेन स्थितेरवश्य ग्राह्यत्वाद्यथान्यायमुपेत्य।

प्रकाशः

नन्वेवमपि चेतनादिसम्बन्धिज्ञानादेर्ब्रह्मकार्यत्वे सिद्धेऽपि ज्ञानादिसम्बन्धिनियमनादेर्ब्रह्म कारणं न सिद्ध्यतीति चेन्न, 'यो यस्य धर्मस्स तदाश्रितः' इत्युक्ते धर्मित्वे सति धर्मस्य रूपादेर्यथा धर्मित्वेन 'यः' इत्यनेन, धर्मितया 'यस्य' इत्यनेन च ग्रहणं, तथा ज्ञानादीनामष्टकान्तर्गतत्वात् 'जन्मादि' इत्यनेन गृहीतानामपि नियम्यत्वादिना रूपेण 'अस्य' इत्यनेनापि ग्रहणात् ।

प्रकाश.

वस्तुतस्तु—'जन्माद्यस्य यत' इति सूत्रन्यासे लाघवमिष्टसिद्धिश्चेतीदमेवादिपदोच्चारणं ज्ञापकं, धर्मिनिर्देशकेन 'अस्य' इत्यनेन नियत्यादिधर्माणामग्रहण इति, यथोक्त एवार्थः सूत्रकृदभिमत इति ध्येयम्। ननु जन्मादित्रयस्य कृत्स्नजगत्सम्बन्धाद्धर्मनिर्देशकेनैतस्यैव ग्रहणं युक्तं, न तु ज्ञानादीनां, तेषां चेतनमात्रसम्बन्धित्वादिति चेत्तत्सम्बन्धार्थमपि 'जन्मादि' इत्यनेनैव ग्राह्यत्वात् । त्वन्मतेऽप्यनादिजीवब्रह्मविभागादौ जन्मादेरयोगात्, 'अस्य' इत्यनेन जन्यमात्रविवक्षायां कृत्स्नस्थितिकारणत्वासिद्धेः, सर्वनाम्नस्सङ्कोचापत्तेश्चेति भावः । 'जन्मादि' इत्यनेन सर्वधर्माणां ग्रहणमित्यत्रापि बाधकमाशङ्कते—नन्वेवमिति । नियत्यादीना जगत्सम्बन्धलाभेऽपीत्यर्थः । ज्ञानादिचतुर्णां च नियमेन जन्मादिसंबन्धाबोधनादिति भावः । रूपादेरिति । रूपत्वादिकं प्रति धर्मी रूपरसादिः घटादिकं प्रति धर्मश्चेत्यर्थः ।

चन्द्रिका

अन्यथा तवापि भङ्गसम्बन्धिजन्मादिकारणं ब्रह्म न सिद्ध्येत् । नित्य कर्मणि यस्य पुंसो यावदङ्गोपसंहारे शक्तिस्तत्प्रयोगे तावदङ्गोपेतेनेव, ब्रह्मण्यपि यस्य वस्तुनः सृष्ट्याद्यष्टके यावत्सम्भवति, तावद्धेतुताऽ-

प्रकाशः

उक्तरीतिस्त्वयाऽपि वाच्येत्याह—अन्यथेति। ननु जन्मादित्रयमात्रविवक्षायां विश्वसंबन्धिजन्मादिहेतुत्वं एकमनुगतं लभ्यते । अन्यथा क्वचिज्जन्मादिहेतुत्वं, क्वचिज्ज्ञानादिहेतुत्वं, इत्यननुगतं स्यादित्यत आह—नित्येति । षष्ठे तृतीयपादे "सर्वशक्तौ प्रवृत्तिस्स्यात्तथाभूतोपदेशात्" इत्याद्यधिकरणे "यावज्जीवमग्निहोत्रं जुहोति" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इत्यादौ किं सर्वाङ्गोपसंहारशक्तानामेवाधिकारः, उत यस्तु यावन्ति शक्नोत्युपसंहर्तुं तावद्भिरुपेतं प्रधानं कुर्वन्नधिक्रियेतेति संदेहे, *अग्निहोत्रेण भावयेदित्युक्ते, कथं* भावयेदिति कथंभावाकांक्षायां, सर्वाङ्गानां समुच्चयेन ग्रहणात, सर्वाङ्गोपेतस्यैव प्रधानस्य फलवत्त्वेन नाङ्गहीनस्य तत्राधिकार इति प्राप्ते, यावच्छब्दोपबद्धं हि जीवनं धातुसंम्बन्धविहितेन णमुल्प्रत्ययेन सम्बन्धान्तराभावान्निमित्तत्वेन यागानुरक्तां भावनां प्रत्यवगम्यते । निमित्तस्य चैतद्रूपं, यत्तस्मिन् सति नैमित्तिकमवश्यं कार्यमिति । अतः प्रधानानुरक्ता भावना स्ववाक्यश्रुतनिमित्तवशप्राप्तावश्यकत्वानुरोधेन यथासम्भवमङ्गानि गृह्णाति, तावतैव शास्त्रवशात् फलसिद्धिरिति, यथाशक्ति प्रयोगेणैवाधिकार इति सिद्धान्तितम् । तथाच

चन्द्रिका

नुगतैव । यद्यपि चेतनस्थानि सुखदुःखादीनि अचेतनस्थानि वृद्ध्यादीन्यपि सन्ति । तथाऽपि विचारविधायकनानावाक्यपरामर्शेन स्कान्दे सूत्रकृतैवाष्टकर्तृत्वस्यैव लक्षणत्वेनोक्तत्वादत्रापि तस्यैव विवक्षणीयत्वान्न दोष । यद्वा * सर्वैर्मुमुक्षुभिर्विशिष्याष्टकर्तृत्वस्यैवान्यकर्तृत्वस्य ज्ञेयत्वनियमाभावान्नान्यदिहादिशब्दार्थः । उक्तं च—

प्रकाशः

तत्र यथा, यत्र यावच्छ्रुतं, तत्र तावन्मात्राङ्गोपेतता, तथाऽत्रापीत्यर्थः । यद्येवमनुगमस्तर्हि 'जन्मादि' इत्यत्राष्टकग्रहणमिवान्येषां चेतनधर्माणां सुखदुःखेच्छाद्वेषादीनामचेतनधर्माणां वृद्धिपरिणामापक्षयादीनां विवक्षायामप्युक्तदिशाऽनुगमसम्भवात् कुतो न ग्रहणमित्याशङ्क्य, त्रेधा समाधिमाह—यद्यपीत्यादिना अष्टकोक्तिरित्यन्तेन । सुखादीनामन्तःकरणधर्मत्वेऽपि 'धनी' इतिवत्स्वामित्वात् 'चेतनस्थान्' इत्युक्तम् । सूत्रकृतोऽपि निमित्तोक्तिः—विचारविधायकेति । यद्यप्यन्वेषणादिवाक्येष्वपहतपाप्मत्वसत्यकामत्वादिधर्माः श्रुताः । तथाऽपि तेषां ब्रह्मपदोक्तगुणग्रहणेन गृहीतिस्तदुपपादकत्वमष्टानामेवेत्येवमुक्तिरिति ध्येयम् । *अवश्यज्ञेयत्वान्मोक्षशास्त्रएतदेव विवक्षितं, नान्यदित्याह—यद्वेति । उक्तं चेति । तात्पर्यनिर्णयाद्याध्यायइत्यर्थः ।

---

* "ननु सूत्रकारस्यापि अन्वेषणादिवाक्योक्तसत्यकामत्वादिवद्ब्रह्मपदेन सुग्रहस्याष्टकर्तृत्वस्यैव पृथगुक्तौ किं निमित्तमित्यत" इत्येतत् "यद्वा" इत्येतदवतरणप्रकारे "अवश्यज्ञेयत्वात्" इत्यत पूर्वमुपस्कर्तव्यम् ॥

चन्द्रिका

सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनात् ।

मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्न चान्यथा ॥ इति ॥

अथवा * विषयोपपादकगुणपूर्तिसिद्धये जीवाद्भेदके प्रसिद्धे जन्मादित्रितयहेतुत्वेऽभिहितेऽपि प्रयोजनसिद्धये मोक्षदत्वस्यापि वक्तव्यत्वात् † तस्य च बन्धकत्वं विनाऽयोगात्, तयोश्च तद्धेतुज्ञानाज्ञानदत्व ‡

प्रकाश

ल्युटाद्युत्करणेन त्रिलिङ्गत्वस्य ज्ञापितत्वात् 'बन्धनात्' इति साधु । *अष्टानामेव प्रकृतोपयोगादन्येषां तदभावादग्रहणमिति भावेनाह—**अथ वेति । अयोगादिति ।** अन्यवद्धत्वादेर्निरासादिति भाव. । 'तयो.' मोक्षबन्धदत्वयो· ।

---

* "ननु मुमुक्षुभिरव.यसेयानामवतारानवतारपञ्चभेदादीनां त्यागेनाष्टकर्तृत्वादिशब्दार्थत्वाङ्गीकृतौ किं नियामकमित्यत " इतीद "अथवा" इत्येतदवतरणप्रकाशे "अष्टानामेव" इत्यत· पूर्वमुपस्कार्यम् ॥

† ब्रह्मणो मोक्षदत्वानभिधाने पूर्वाधिकरणोक्त मोक्षस्य ब्रह्मजिज्ञासाफलत्व न सिद्ध्यति निगडादिबन्धनिवर्तनसमर्थराजप्रसादस्यैव निगडान्मोचकत्वदर्शनेन ब्रह्मणो मोक्षदानसामर्थ्यासिद्धौ तज्जिज्ञासाजन्यतदपरोक्षजतत्प्रसादस्य मोक्ष प्रत्यकिंचित्करत्वात् । अत "त्व मुक्तिदो बन्धद' इत्यादिश्रुतिप्रमित ब्रह्मणो मोक्षदत्व मोक्षस्य तज्जिज्ञासाफलत्वासिद्ध्यर्थमवश्य वक्तव्यमिति भाव ॥

‡ 'तद्धेतुज्ञानाज्ञानदत्व मोक्षहेतुज्ञानदत्व बन्धहेत्वज्ञानदत्व चेत्यर्थ । अत्र साक्षान्नीचोच्चतालक्षणविकारापादककादाचित्कसुखदु·खानुभवस्यैव बन्धशब्दार्थत्वात्त बन्धज्ञानस्य हेतुत्वमुपपन्नम् । तेन "अविद्यादेरेव ससारत्वात्" इत्यादिस्वप्नाधिकरणसुधाविरोधो न, परम्परयोक्तविकारहेतुत्वरूपससारत्वस्यैवाविद्याया त-

चन्द्रिका

विनाऽनुपपत्तेस्त्रितयहेतुत्वस्यापि वक्तव्यत्वात्पुनश्च दीपस्तम इव, ज्ञानं बन्धकाज्ञानं स्वभावादेव हन्ति, किमीश्वरेणेति शङ्कायां, दीपज्ञानादिस्वभावोऽपि भगवन्नियत इति वाच्यत्वात् प्रकृतोपयोगितयाऽष्टकोक्तिः। यथा च स्रष्टृत्वादावेकैकस्यैव लक्षणत्वोपपत्तावपि त्रितयोक्तिः स्थितिहेतुरन्य इति शङ्कानिरासार्थं वा, अनेकलक्षणसूचनार्थं वा, तथाऽष्टकोक्तिरपि तदर्थमस्तु। न चोपादानत्वाय त्रितयोक्तिः, सृष्टिलयाभ्यामेव तत्सिद्धेः। सम्भवति च गुणपूर्तिविनेकोपपादकोपन्यासः। तस्मादष्टकमेव जन्मादिशब्दार्थः॥

प्रकाशः

त्रितयेति। बन्धज्ञानाज्ञानत्रितयेत्यर्थः। यद्वोक्तदिशा जन्मस्थितिभङ्गानां बन्धमोक्षयोर्ज्ञानाज्ञानयोश्चैकैकसमुदायत्वं विवक्षित्वा 'त्रितयहेतुत्वस्यापि' इत्युपसंहारः। नियतेरुपयोगमाह—पुनश्चेति। अत्राद्यः परिहारो भाष्योक्तस्कान्दस्मृत्या सूचितः। द्वितीयस्तु 'सृष्टिरक्षा' इति स्मृत्या। तृतीयस्तु—

> यतो मोक्षादिदाताऽसावतो जिज्ञास्य एव च। इत्यनेन,
>
> नर्ते त्वत्क्रियते किञ्चिदित्यादेर्न हरिं विना।
>
> ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्यापि हि क्वचित्॥

इत्यादिना चानुव्याख्यानेन सूचित इत्याहुः। नन्वेकलक्षणोक्तावपीष्टसिद्धेर्नानेकोक्तिरर्थवतीत्यत आह—यथा चेति। परमतइति भावः। सम्भवति चेति। जन्ममात्रोक्तौ जगज्जन्मोपयुक्तानां केषां चिद्गुणानां

प्रकाशः

त्वाभेऽपि स्थित्युपयुक्तगुणालाभात् साऽपि ग्राह्या। तथा संहर्तृत्वमोचकत्वादिप्रयोजकधर्माणां लाभाय स्रष्टृत्वादीनां स्वस्वप्रयोजकानेकगुणाक्षेपकत्वं तेषां ग्रहणएव सिध्यति, नान्यथा। न हि 'चैत्रो . रूपद्रष्टा' इत्युक्ते चक्षुष्मत्तेव श्रोत्रादिमत्ता सिध्यति। तथा च तत्र सर्वेन्द्रियवत्त्वप्रतिपादनाय तत्तदाक्षेपकं रूपज्ञानशब्दज्ञानादिकं सर्वमुपपादकमुपादेयं, तद्वत् सर्वगुणपूर्त्यर्थमनेकोपपादकोक्तिर्युक्तेति भावः। एतेन—यदाह कश्चित्, जन्मादिकारणत्ववद्गुणपूर्तेरपि विष्णौ श्रुतत्वान्न तत्रोपपादकापेक्षा। अन्यथा तत्राप्येवमित्यनवस्थाऽऽपत्तेर्नेदं सूत्रमारम्भ्यम्। जन्मादिहेतुत्वस्यापि सत्यकामत्वादिवद्गुणतया ब्रह्मपदोक्तगुणपदेन ग्रहणेन तस्य द्विरूप्यापाताच्च। किंचोपपाद्योपपादकयोर्द्वयोरपि श्रुत्येकसमधिगम्ययोस्तज्जन्यनिर्णयदशायां नोपपादकापेक्षा, आपातदशायां द्वयोरप्यनिर्णायकत्वं, वैपरीत्यस्य वाऽऽपत्तिरिति, तन्निरस्तम्। ब्रह्मपदश्रुत्या पूर्वं प्रतीतस्य गुणपूर्णत्वस्यासम्भावनयाऽसत्त्वशङ्कायां वाक्यप्रमाणेनानन्तरं धीस्थेन जन्मादिहेतुत्वेनोपपादने दोषाभावात्। अन्यथा मीमांसाऽनारम्भापत्तेः। श्रौते श्रौतस्योपपादकत्वात्। हेतुत्वेन गुणपूर्त्युपपादनस्येव तया तदुपपादानस्य अशक्यशङ्कत्वाच्च। "पराऽस्य शक्तिः" इतिश्रुतौ परत्वस्य स्वाभाविकत्वादिना, "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात्" इत्यादिश्रुतौ दृष्टेरभ्रान्तित्वस्याविनाशित्वेनोपपादनदर्शनाच्च। सामान्याकारेणोपपाद्य-

चन्द्रिका

केचित्तु "यतो वे" इत्यादिश्रुतौ प्रतिवाक्यं "तद्ब्रह्म" इत्यनुक्तेरनेकलक्षणवैयर्थ्याच्च जन्मादिहेतुत्वसमुदाय एकं लक्षणम् । अत एव सूत्रे 'जन्मादि' इत्येकवचनमित्याहुः । तन्न, व्यावर्त्याभावात् * । न हि सर्वजगज्जन्मकारणं तत्स्थित्याद्यकारणं च किंचिदस्ति । ननु

प्रकाश.

कोटिनिविष्टस्यापि स्वाध्यायाध्ययनविध्यादिवद्विशेषाकारेणोपपादकत्वाविरोधाच्च । अस्यां दशायां तदन्यस्यैव गुणपदेन ग्रहणोपपत्तेश्च । "कर्तृत्वात्सगुणं ब्रह्म" इति भागवते सूत्रकृतैव स्पष्टमुपपादकत्वोक्तेश्चेति ॥

सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः ।

इत्यनुव्याख्यानेऽसमासनिर्देशेन सूचितं जन्मादीनां प्रत्येकलक्षणत्वं साधयितुं परोक्तं निराह—केचित्त्विति । व्यावर्त्याभावादिति । अत एव तद्भाष्ये "जगद्याचित्वात्" इत्यत्र "यस्य चैतत्कर्म सवेदितव्य." इति वेद्यस्य ब्रह्मत्वे साध्ये जगज्जनकत्वस्य, "अक्षरमम्बरान्तधृतेः" इत्यत्राक्षरस्य ब्रह्मत्वे अम्बरान्तधारकत्वरूपस्थितिहेतुत्वस्य, "अत्ता चराचर" इत्यत्रादनकर्तुर्ब्रह्मत्वे संहर्तृत्वस्य हेतुत्वेनोपन्यास इति भावः ।

---

* न च सर्वजगज्जन्ममात्रकारणस्य व्यावर्त्यवस्तुनोऽभावेऽपि तथात्वेन शङ्कितस्यैव व्यावर्त्यत्वमस्त्विति युक्तम, त्रितयकारणस्याप्यन्यस्य शङ्कितु शक्यत्वेन तद्व्यावर्तनाय पुनरधिककारणत्वस्य निवेशनीयत्वापत्त्या लक्षणापर्यवसानप्रसङ्गात् ॥

चन्द्रिका

जन्मादिहेतुत्वं निरतिशयबृहत्त्वस्योपलक्षकम् । न च तदुपलक्षणमेकेनैव युक्तं, जन्ममात्रोक्तौ स्थित्याद्युपयोगिज्ञानाद्यभावेन निरतिशयबृहत्त्वासिद्धे । अतस्समुदायोक्तिरिति चेन्न, त्रितयोक्तावपि मोचकत्वोपयोगिशक्त्याद्यलाभात्* । उपलक्षणस्योपलक्ष्योपपादकत्वानियमाच्च† । उक्तशङ्कानिरासार्थमेवानेकलक्षणोक्तिसम्भवाच्च । प्रतिवाक्य "तद्ब्रह्म" इत्यनुक्तिस्तु ब्रह्मव्यक्तिभेदशङ्कानिरासार्थमिति त्वयाऽपि स्वीकृतम् ।

प्रकाश

एवमपि पूर्णत्वासिद्धिरित्याह—त्रितयेति । स्वीकृतमिति । ब्रह्मशब्दैक्यात् ब्रह्मैक्यमिति वदता स्वीकृतमित्यर्थ ।

* 'द्यभावात्' इत्यपिपाठ ॥

† उपलक्षणविशेषे काकादौ देवदत्तगृहत्व विनाऽप्युपपद्यमाने देवदत्तगृहत्वोपपादकत्वादर्शनेन व्यभिचारादित्यर्थ । न च तन्नियमाभावेपि प्रकृते किं तद्ब्रह्मेति प्रश्नोत्तरभूतेन "यतो वै" इत्यादिना जगज्जन्मादिकारणत्वमुद्देश्यतावच्छेदकीकृत्य ब्रह्मत्वविधानादुद्देश्यतावच्छेदकविधेययोर्व्याप्यव्यापकभावावगमस्य व्युत्पत्तिसिद्धतया व्याप्यत्वेनावगते जन्मादिकारणत्वे विधेयब्रह्मत्वोपपादकत्व स वतीति वाच्यम्, सर्वजगज्जन्माद्येकैककारणत्वस्यापि ब्रह्मत्वव्याप्यत्वेन ब्रह्मत्वोपपादकत्वसभवे, जन्मादिहेतुत्वसमुदाये तदुपगमस्यायुक्तत्वात् । निरतिशयबृहत्त्व विनाऽनुपपद्यमानत्वरूपमुपपादकत्व तूक्तकारणत्वसमुदायस्यापि नास्तीति त्वनुपदमवोचामिति ध्येयम् ॥

चन्द्रिका

अन्यथा सत्यज्ञानादिवाक्येऽपि प्रतिपदं ब्रह्मपदाश्रवणात् * निरुपाधिकसत्तायोगित्वनित्यासङ्कुचितज्ञानत्वापरिच्छिन्नगुणत्वरूपाणां सत्यत्वज्ञानत्वानन्तत्वात्मकानां स्वरूपलक्षणानामपि प्रत्येकं लक्षणत्वं न स्यात् ।

प्रकाशः

सत्यज्ञानादिशब्दार्थानामतिव्याप्तिशून्यत्वात्पृथग्लक्षणत्वमिति ज्ञापनाय तद्व्याप्योक्तमेव तेषां स्वरूपमनुवदति—निरुपाधिकेति । एवंविधसत्यत्वं नामान्तरभजनार्हावस्थान्तरयोगित्वेन निरुपाधिकसत्त्वरहितयोर्जीवजडयोर्नास्तीति भावः । नित्येति । अनेन ज्ञानशून्यस्य जडस्य, सङ्कुचितज्ञानस्य संसारिणः, कदाचिदसंकुचितज्ञानस्य मुक्तस्य च व्यवच्छेदान्नातिव्याप्तिरस्येति भावः । अपरिच्छिन्नेति । अनेनाल्पगुणास्सर्वे व्यावृत्ता इति भावः । तत्र प्रत्येकं ब्रह्मपदावृत्ताविहापि 'तद्ब्रह्म' इत्यस्यावृत्तिरस्तु, आवृत्तौ ब्रह्मानेकत्वशङ्का तत्रापि तुल्येति ।

* न च "योवेद" इत्युत्तरवाक्यस्यविदिक्रियापेक्षितकर्मसमर्पकाद्वितीयान्तपदसमुदायरूपे "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्र ब्रह्मपदस्य प्रत्येकं श्रवणशङ्का बुद्ध्यारोहमपि नार्हतीति युक्तम्, "ब्रह्मविदाप्नोति परं" इत्यत्र प्रसक्तं ब्रह्म किंलक्षणकमित्याकाङ्क्षानिवृत्तये उदाहृतमन्त्रवर्णघटकस्यास्य लक्षणवाक्यत्वौचित्येन द्वितीयान्तसमुदायत्वासप्रतिपत्तेः । तथात्वेऽपि 'ब्रह्म सत्यं वेद' 'ब्रह्म ज्ञानं वेद' 'ब्रह्म अनन्तं वेद' इति ब्रह्मपदानेकत्वेऽपि कर्मार्पकत्वाविरोधाच्च ॥

चन्द्रिका

सौत्रैकवचनादपि न समुदायस्य लक्षणता । "यत्र साक्षादयस्सार्गाः" "हलोऽनन्तराःसंयोगः" इत्यादौ बहुवचनेऽपि समुदाये लक्षणत्वसंयोगसंज्ञादेः, 'यस्य च्छत्रादिकं सराजा' "अजाद्यतष्टाप्" इत्यादावेकवचनेऽपि प्रत्येकं लक्षणत्वादेर्दर्शनात् ।

प्रकाशः

यदपि 'जन्मादि' इत्येकवचनादिकलक्षणत्वधीरिति, तदप्यन्वयव्यतिरेकव्यभिचारान्नेत्याह—सौत्रेति । विशेषणत्वे व्यतिरेकव्यभिचारोक्तिः—यत्रेति । उपलक्षणत्वे तदुक्तिः—हलोऽनन्तरा इति । यद्वा—लौकिकवैदिके व्यभिचारस्थले एते । एवमग्रेऽपि ज्ञेयम् । "हल." इत्यत्र "उभे अभ्यस्ते" इत्यादौ चैकवचनान्तत्वाभावेपि 'ग्लानं ददते' इत्यादौ संयोगाभ्यस्तसंज्ञे प्रति समुदायस्यैव संज्ञित्वं दृष्टम् । अन्यथा प्रत्येकं संज्ञित्वे 'निर्यातं' इत्यादावपि धातुयकारस्य संयोगसंज्ञाप्रसङ्गेन "संयोगादेरातो धातोर्यण्वत." इति निष्ठानत्वं स्यात् । विस्तृतं चैतन्महाभाष्यएवेति भावः। सत्यप्येकवचने एकलक्षणत्वाभावात् अन्वयव्यभिचार इति भावेनाह—यस्येति । छत्रचामरादि. प्रत्येकं लक्षणत्वं, तथा "अजाद्यत." इत्यत्र टाप्प्रत्ययविधि प्रत्यजादिगणस्य अकारान्तस्य च 'अजा एडका' इत्यादौ 'सर्वा' इत्यादौ च प्रत्येकं निमित्तत्वं दृष्टं, अन्यथा 'यस्य छत्राद्यस्सराजा' इति 'अजाद्यद्भ्यष्टाप्' इति निर्देशस्स्यादित्यर्थः । आदि-

प्रकाश

पदेन "अदेङ्गुण" इत्यादौ प्रत्येक संज्ञादर्शनादिति ग्राह्यम्। ननु सात्त्वादौ प्रत्येकमतिव्याप्तेर्बाधकात्समुदाये लक्षणत्वं, तथा संयोगसंज्ञाऽपि 'निर्यातम्' इत्यादावतिप्रसङ्गादन्वर्थसंज्ञाविज्ञानाच्च समुदाये वर्तते। उक्तं च वृद्धिसूत्रे कैयटे—"संयोगसंज्ञा त्वन्वर्थत्वात्समुदाये प्रवर्तते" इति। तथा प्रत्येकमभ्यस्तसंज्ञाया 'नेनिजानि' इत्यत्र "अभ्यस्तानामादि" इति प्रत्येकमाद्युदात्तत्वप्रसङ्गबाधकादुभेग्रहणबलाच्च समुदाये प्रवर्तते। छत्रादिकमतिव्याप्त्यादिशून्यत्वात् प्रत्येकमेव लक्षणम्। "अजाद्यत" इत्यत्र 'सर्वा' इत्यादौ लक्ष्ये अकारान्तादपि टाप्प्रत्ययदर्शनादजादेरकारान्तत्वाव्यभिचारेण तद्विशेषणत्वायोगाच्च प्रत्येकं निमित्तत्वम्। न च बाधकापत्तेः व्यभिचारो दोषावह। उक्तं चाचार्यैः—

व्यभिचार्यपवादेन मानमेव भविष्यति।

इतीतिचेत्, तर्हीहापि व्यावर्त्याभावात् बाधकात्प्रत्येकमेव लक्षणमस्तु। अत एव त्वया "जगद्धात्रित्वात्" इत्यादौ प्रत्येकमेव हेतूकृतमिति भाव। ननु 'गर्गा शत दण्ड्यन्ताम्' इत्यत्रापराधकर्तृषु गर्गेषु शतनिष्कदण्डन न प्रत्येक, किन्तु समुदाये दृष्टम्। अत एव—

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्।
अप्रधाने दुहादीना ण्यन्ते कर्तुश्च कर्मण॥

इति वचनात् गर्गाणामप्राधान्येन 'दण्ड्यन्ता' इति लकाराभि-

चन्द्रिका

'गर्गाः शतं दण्डयन्ताम्' इत्यादौ समुदायइव 'विप्रा भोजयन्ताम्' इत्यादौ प्रत्येकमपि वाक्यसमाप्तिदर्शनाच्च। तस्माज्जन्मादिहेतुत्वं प्रत्येकं लक्षणमिति ॥

यच्चोक्तं परैर्जन्मादिकारणत्वं तटस्थलक्षणमानन्दादिरेव स्वरूपलक्ष-

प्रकाश

हितत्वात् प्रथमा। शतस्य च प्राधान्यादनभिहितत्वेन द्वितीया। विवृतं चैतद्वृद्धिसूत्रादौ तत्रतत्र महाभाष्ये। "समुदाये वाक्य परिसमाप्तिस्तद्यथा 'गर्गा शतं दण्ड्यन्ताम्' इति। अर्थिनश्च राजानो हिरण्येन भवन्ति। न च प्रत्येकं दण्डयन्ति" इति। तथा च तद्वदिहापि समुदाये लक्षणत्वमित्यत आह—**गर्गा इति**। अत्र वाक्यशब्दः प्रयोजकव्यापाररूपवाक्यार्थोक्तिद्वारा तत्फलभूतप्रयोज्यव्यापाररूपभोजनलक्षकः। तथा च वाक्यार्थफलस्य भोजनस्यास्वादनादिरूपत्वेन तृप्तिफलत्वेन च प्रतिविप्रं परिसमाप्तिदर्शनादित्यर्थः। उक्तं च कैयटे—"वाक्यशब्देन वाक्यार्थफलमुच्यते" इत्यादि। समुदायलक्षणत्वस्यैकवचनेनाज्ञापितत्वादयुक्तत्वाच्च प्रत्येकलक्षणत्वं न्याय्यमित्युपसंहरति—**तस्मादिति** ॥

जन्माद्यस्येति तेनैतद्विष्णोरेव स्वलक्षणम्।

इत्यनुव्याख्यानोक्तं स्वरूपलक्षणत्वं समर्थयितुमद्वैत्युक्ततटस्थत्वमनूद्य निराह—**यच्चेति**। यथा चन्द्रस्य शाखाग्रं तटस्थलक्षणं, प्रकृष्टप्रकाशत्वं स्वरूपलक्षणं, तद्वदिति भावः। अत्र यद्यपि तद-

चन्द्रिका

णमिति, तत्र, न तावल्लक्ष्यगतागते स्वरूपतटस्थलक्षणे इति युक्तम्; काकादेर्गृहे, कारणत्वस्य च ब्रह्मणि, अध्यासतटस्थलक्षणस्य कारणत्रितयजन्यत्वस्य चाध्यासे सत्त्वेन स्वरूपलक्षणत्वापातात्। आनन्दादेः स्वरूपलक्षणत्वाभावप्रसङ्गाच्च। एतेन—सत्यासत्ये स्वरूपतटस्थलक्षणे इति निरस्तम्। काकादेरध्यासतटस्थलक्षणस्य च गृहादावक-

प्रकाश

स्थलक्षणमेवानुवदनीयं, न स्वरूपलक्षणं, तस्यानुमतत्वादविरोधित्वेनादूष्यत्वाच्च। तथाऽपि तटस्थस्य लक्षणं तत्रातिव्याप्तमिति वक्तुं वा, तल्लक्षणमत्रास्तीति तद्वदिदमपि स्वरूपलक्षणमिति वक्तुं वा, विभाग एवायमयुक्त इति वक्तुं वेति ध्येयम्। के ते स्वरूपतटस्थलक्षणे, लक्ष्यगतागते वा, सत्यासत्ये वा, यावत्स्वबोध्यव्यावृत्तिभाव्यभाविनी वा, यावल्लक्ष्यभाव्यभाविनी वा, लक्ष्यान्तर्गतानन्तर्गते वा, निरुपाधिकसोपाधिकरूपे वा, स्वतोव्यावर्तकव्यावर्तकान्तरोपस्थापकरूपे वा, विशेषणोपलक्षणरूपे वेत्यष्टधा विकल्प्याद्यं निराह—तत्रेति। षष्ठ्यन्तानां 'सत्त्वेन' इत्यनेनान्वयः। कारणेति। दोषसंस्कारेन्द्रियसम्प्रयोगरूपकारणत्रितयेत्यर्थः। आनन्दादेरिति। तस्य ब्रह्मैक्येन तदनिष्ठत्वादिति भावः। एतेन—तटस्थलक्षणलक्षणस्य लक्ष्यागतत्वस्य स्वरूपलक्षणे आनन्दादावतिव्याप्तिः, कारणत्वादावसम्भवश्चोक्त इति ध्येयम्। द्वितीयं निराह—एतेनेति। लक्ष्ये अनध्यस्ताध्यस्तरूपे इत्यर्थः। काकादेरिति। तत्र तटस्थलक्षण-

चन्द्रिका

ल्पितत्वात् । ननु कारणत्वमपि विशिष्टे, न तु शुद्धइति चेन्न, शुद्धे सतोऽसम्भवादिप्रसङ्गेन तल्लक्षणत्वायोगात् । न च लक्षणत्वस्यैवाभावे तद्विशेषतटस्थलक्षणत्वं युक्तम् । शाखास्थूल तारादिकं तु न चन्द्रस्वरूपत्वादिलक्षणत्वेनोच्यते, किन्तु चन्द्रादिव्यक्तिं प्रदर्श्य स चन्द्र इत्यादिकं वक्तुम् । प्रकृते तु न तथा,

प्रकाश

मव्याप्तमित्युक्तं भवति । यदुक्तं—ब्रह्मणि कारणत्वस्य सत्त्वेनेत्यादि, तन्न, मायावच्छिन्नं ब्रह्म कारणमिति पक्षे कारणत्वस्य मायाविशिष्टगतत्वेन शुद्धगतत्वाभावादित्याशङ्कय निरस्यति—नन्विति । आदिपदेनातिव्याप्तिः, शुद्धस्यैव जिज्ञास्यब्रह्मतया लक्ष्यत्वेनालक्ष्ये विशिष्टे गतत्वात् । उपलक्षणमेतत् । मायाब्रह्मणी सूत्रद्वयमिव रज्जौ कारणमिति पक्षे कारणत्वस्य ब्रह्मणि सत्त्वेन स्वरूपलक्षणत्वापत्तिः, मायायामतिव्याप्तिः । मायैव तु कारणं ब्रह्म त्वधिष्ठानमिति पक्षेऽसम्भवोऽतिव्याप्तिश्चेत्यपि बोध्यम् । स्वरूपलक्षणस्यैव लक्ष्यस्थत्वनियमो न तटस्थस्येत्यत आह—न चेति । असम्भवादिना लक्षणत्वस्यैवाभावे इत्यर्थः । कथं तर्हि लक्ष्यानिष्ठमपि शाखादिकं चन्द्रादितटस्थलक्षणमित्यत आह—शाखेति । नन्विहापि "तद्ब्रह्म" इति वक्तुं "यतो वै" इत्यनेन कारणत्वमुच्यते, न तु लक्षणत्वेनेत्यत आह—प्रकृते त्विति । "किं लक्षणं पुनस्तद्ब्रह्मेत्यत आह" इति त्वदीयभाष्ये लक्षणत्वो

चन्द्रिका

शब्दैकगम्यशुद्धरूपस्य मानान्तरायोग्यत्वात् । न च "यतो वै" इत्यादिवाक्यमेवाभिधया कारणत्वमुपस्थाप्य पुनस्तन्मुखेन लक्षणया कारणत्वरहितमानन्दैकरसं शुद्धं बोधयतीति युक्तम्, सकृत्प्रयुक्ते वृत्तिद्वयायोगात् ।

प्रकाश.

क्तिविरोधात्, त्वदभिमते ब्रह्मणि ब्रह्मपदशक्तेरभावेन तदर्थं तद्बोधाय तदुक्तचयोगाच्चेति भाव । किञ्च तस्य शुद्धस्य बोधनमपि चन्द्रादेरिव प्रत्यक्षेणाथशब्देन । आद्ये दोषमाह—शब्दैकेति । उपलक्षणमेतत् । प्रत्यक्षेण तद्बोधने शाखादेरिव प्रत्यक्षस्यैव कस्य चिज्ज्ञापकस्य वाच्यत्वेनाताद्दशकारणत्वोक्तचयोगादित्यपि बोध्यम् । द्वितीयेऽपि "यतो वै" इत्यादिना शब्देन शुद्धब्रह्मबोधं कृत्वा "तद्ब्रह्म" इति वक्तु कारणत्वमत्रोच्यते, अथ वाक्यान्तरेण । आद्येऽपि "यतो वै" इत्यादिना सर्वेण शब्दसमुदायेन तद्बोध, उत 'यत' इत्यनेनैवेति विकल्पान् हृदि कृत्वाऽऽद्यमनूद्य निराह—न चेति । अभिधयेति। 'यतः' इत्यादिपदगताभिधयेत्यर्थ । तस्यापि लक्ष्यत्वे मुख्यस्यान्यस्याभावेन मुख्यार्थसम्बन्धाभावाद्द्यनवृत्त्या कारणत्वप्रतीतेरिति भाव । तन्मुखेनेति । शाखामुखेन चन्द्रबोधनवदिति भाव । लक्षणयेति । मुख्यवृत्त्यैवंविधस्याप्रतीतेरिति भाव । 'वृत्तिद्वय' इत्युपलक्षणम् । लक्षणाया पदवृत्तित्वेन वाक्यस्य लक्षकत्वायोगात्, "अर्थमन्त

चन्द्रिका

केवललक्षणयैव शुद्धबोधनसम्भवेनाभिधया कारणत्वोपस्थापनवैयर्थ्या-च्च । एतेन—'यत' इत्येनैव पदेन शुद्धप्रतीतिरिति निरस्तम् । शुद्धरूपस्य तेनैव सिद्धत्वेन शेषवैयर्थ्यात् । सत्यज्ञानादिवाक्यान्त-रेण शुद्धसिद्धौ तु कारणवाक्यवैयर्थ्यम् । नहि 'प्रकृष्टप्रकाशश्चन्द्र ' इत्युक्ता शाखाग्रमपि दर्शयन्ति । न वा प्रकृष्टप्रकाशत्वादि-

प्रकाश

वेदि " इत्यादौ वाक्ये लक्षकत्वस्याखण्डार्थत्वभङ्गे निरामात्, वि-रम्यव्यापारायोगाच्चेत्यपि ध्येयम् । ननु यथा 'गङ्गाया घोष ' इत्यत्र गङ्गापदं शक्त्या प्रवाहमुपस्थाप्य तीरमुपस्थापयति, यथा वा वायुक्षेपिष्ठाद्यर्थवादस्स्वार्थं शक्त्योपस्थाप्य प्राशस्त्यं लक्ष-यति, तद्वदत्रापीति चेत्, भ्रान्तोसि । न हि तत्र शब्दएव वृत्तिद्वयेन द्वयमप्युपस्थापयति, किन्तु लक्षणया तीरादिकमेव । प्रत्येता तु शब्दतात्पर्यमजानन् पूर्वं प्रवाहादि प्रतीत्य तत्रानुप-पत्तिं मत्वानन्तीरादि प्रत्येतीत्येव । न चैवं प्रकृते, जन्मादिसूत्रे का-रणत्वस्य श्रुत्यर्थत्वेनैव कीर्तनादिति भाव । केवलेति । न च मुख्यार्थसम्बन्धार्थं तदुक्ति, शुद्धस्यासङ्गत्वेन तीरे पूरसंबधस्येव शुद्धे कारणत्वसम्बन्धाभावेन तदनपेक्षणादिति भाव । द्वितीय निराह—एतेनेति । तृतीय प्रत्याह—सत्येति । उभाभ्यामपि ब्रह्मसिद्धिरस्त्विति चेत्, किं साक्षात् उत परम्परया । आद्ये आह—कारणेति ।

चन्द्रिका

ज्ञानानुपायमन्यदेवोक्त्वा 'प्रकृष्टप्रकाशश्चन्द्रः' इति वदन्ति । न च 'जगत्कारणं ब्रह्म' इत्यनुक्त्वा "आनंदो ब्रह्म" इति वक्तुमशक्यम् । नापि यावत्स्वप्रत्याप्यव्यावृत्तिभाव्यभाविनी स्वरूपतटस्थलक्षणे, त्वन्मते यावद्व्यावृत्तिभाविव्यावर्तकान्तराभावेनास्यैव यावद्व्यावृत्तिभावित्वावश्यम्भावात् * ।

प्रकाश.

अन्यआह—न चेति । कारणत्वस्य स्वरूपलक्षणस्य ज्ञाने अभिधाने वा अनुपयोगात् तदुक्तिर्व्यर्थेत्यर्थः । तृतीयमाशङ्क्य प्रत्याह—नापीति । स्वबोध्यव्यावृत्तिर्यावल्लक्ष्येऽस्ति, तावत्तत्र वर्तमानं स्वरूपं, तावदवर्तमानं तटस्थम् । अस्ति चेदं प्रकृष्टप्रकाशत्वे काकादौ चेति भावः । व्यावर्तकान्तरेति । सत्य-

* न च स्वज्ञाप्यव्यावृत्त्यधिकरणयावत्कालवृत्तित्व ज्ञापकस्य कारणत्वस्य नावश्यकमिति शङ्क्यम्, स्वयमेवानृतादिव्यावृत्तिरूपत्वेन ब्रह्मस्वरूपमात्रत्वेन च व्यावृत्तिं प्रति कारकत्व-ज्ञापकत्वरहिते सत्यादिवाक्यतात्पर्यविषये स्वरूपलक्षणे यावत्स्वप्रत्याप्यव्यावृत्तिभावित्वस्यानभ्युपगमेन कारणत्वएव तस्य वाच्यत्वादित्याशयात् । न च स्वप्रत्याप्यव्यावृत्त्यधिकरणकालत्वव्यापकत्वमुक्तलक्षणार्थं । इद न स्वप्रत्याप्यव्यावृत्त्याधिकरणकालत्ववर्ति तत्त्वज्ञानाव्यवहितोत्तरक्षणे मिथ्यात्वेनावर्तमानस्य कारणत्वस्य न सम्भवतीति वाच्यम्, व्यावृत्तेर्मिथ्यात्वे तस्या कारणत्वस्येव तत्त्वज्ञानाव्यवहितोत्तरक्षणे सत्त्वस्यैवासम्भवात्, सत्यत्वेपि तत्त्वज्ञानेन सर्वद्वैतविलयोपगमेन तत्त्वज्ञानोत्तर क्षणस्यैवाप्रसिद्ध्या तमादाय दूषणाप्राप्त्या कारणत्वे उक्तस्वरूपलक्षणत्वस्य निर्बाधत्वात् ॥

चन्द्रिका

अध्यासतटस्थलक्षणेऽतिव्याप्तेश्च *। अत एव न यावल्लक्ष्यभाव्यभाविनी स्वरूपतटस्थलक्षणे, अलक्ष्यव्यावर्तकस्याभावे लक्ष्यस्यानवस्थानाच्च †।

प्रकाशः

त्वादेर्लक्ष्याभेदेन तटस्थत्वाभावादस्यैव स्वरूपलक्षणत्वमिति भावः। अध्यासेति। कारणत्रितयजन्यत्वस्य यावद्व्यावृत्ति सत्त्वादिति भावः। चतुर्थं निराचष्टे—अत एवेति। उक्तातिव्याप्तेरित्यर्थः। अनवस्थानाच्चेति। लक्षणं हि लक्ष्यस्यालक्ष्याद्व्यावर्तकं सत्स्वयं

---

* न चास्मिन्नुत्तरस्मिंश्च कल्पे कारणत्रितयजन्यत्वमध्यासस्य स्वरूपलक्षणमेवेत्युपगमान्न तत्रातिव्याप्त्युक्तिर्युक्ता। युज्यते चैकस्यैव लक्षणभेदेन लक्ष्यत्वमलक्ष्यत्वं च, साध्यसंदेहजनककोटिद्वयोपस्थापकपक्षधर्मताज्ञानविषयत्वे सति हेत्वभिमतत्वमिति सव्यभिचारलक्षणं प्रत्यलक्ष्यस्य, विरुद्धस्य अनुमितिविरोधिसम्बन्धाव्यावृत्तिरूपतल्लक्षणं प्रति लक्ष्यत्वदर्शनादिति वाच्यम्, लक्षणविभाजकयोः स्वरूपतटस्थत्वयोरेकत्र समावेशस्यैवायुक्तत्वात्। विभागस्य परस्परासंकीर्णधर्मकथनरूपत्वात्। उदाहृतं सव्यभिचारलक्षणद्वयं तु मतभेदेन प्रवृत्तमिति न तद्दृष्टान्तेन एकमतानुसारिभिन्नभिन्नलक्षणानि प्रति एकस्यैव प्रकृते लक्ष्यालक्ष्यभावसंभव इत्यलम्॥

† लक्ष्यलक्षणभावस्य परस्परनिरूप्यत्वेन तयोरेकतराभावेऽपरस्य दुस्स्थतया लक्षणाभावदशायां लक्ष्यत्वस्य दुर्निरूपत्वेन तदाश्रयरूपलक्ष्यावस्थितेरयोगादिति गुरुराजीयाभिमतोऽर्थः। अस्मिन् लक्षणवाक्ये लक्ष्यलक्षणपदाभ्यां ज्ञाप्यज्ञापकभावएव विवक्षितोऽतो नायं दोषइति न शङ्कनीयम्, 'यावत्स्वप्रत्याप्य' इत्यादिपूर्वोक्तलक्षणानतिरेकप्रसङ्गेन तथाविवक्षणस्य दुष्करत्वात्। उद्देशेनैव ज्ञातस्य लक्षणधर्मिणो लक्षणज्ञाप्यत्वाभावेनासंभवाच्च। लक्षणज्ञानजन्यव्यावृत्तिविधेयकानुमितौ भानमात्रेण लक्षणधर्मिणोऽपि लक्षणज्ञाप्यत्वाभिमाने तु, उदासीनघटादिपदार्थस्यापि तादृशसमूहालम्बनानुमितौ भानसंभवेन लक्षणज्ञाप्यभूतोदासीनपदार्थाधिकरणयावत्कालभावित्वस्य ज्ञाप्यभविनासमनानतिवृत्तेरिति ध्येयम्॥

चन्द्रिका

न ह्यक्षीराद्व्यावर्तकं हनि क्षीरम्। न वाऽक्षीरदशायामसन्माधुर्यविशेषो न क्षीरस्वरूपलक्षणम्।

ईशान प्रभुरव्यय ।
अद्वैतस्सर्वभावाना देवस्तुर्यो विभुस्स्मृत ।
तुरीय तत्सर्वदृक् सदा

इत्यादिश्रुत्या कारणत्वादिरपि यावल्लक्ष्यभावित्वाच्च * ।

प्रकाश

यावल्लक्ष्येऽस्ति, तावल्लक्ष्यमलक्ष्याद्व्यावर्तयति । स्वस्यैवाभावे कथमितरव्यावृत्तस्वरूप सल्लक्ष्यमवतिष्ठेत । अतो लक्षण चेद्यावल्लक्ष्यभाव्येव वाच्यमिति कारणत्वस्यातथात्वे लक्षणत्वमेव नेति तटस्थत्व दूरापेतम्, अतो यावल्लक्ष्यभावित्व तस्योपेयमिति भाव । ननु सृष्ट्याद्यभावकालेऽसत्कारणत्व कथ स्वरूपलक्षण स्यादित्यत आह—**न चेति** । तद्दशाया ब्रह्मत्वस्यैवाभावादिति भाव । अङ्गीकृत्य चेदमुक्तम्, वस्तुतस्त्वकारणतादशैव नेत्याह—**ईशान इति** । माण्डूक्ये "प्रपञ्चोपशम शिवमद्वैत चतुर्थम्मन्यन्ते" इति पूर्ववाक्ये प्रपञ्चोपशमशब्देन सर्वानिष्टनिवृत्तिकारणत्वमुक्त्वा, तत्रैवार्थे

* ईशानत्वप्रभुत्वादीनामुपलक्षणत्वेनापि श्रुत्यापाधान कारणत्वस्य याव लक्ष्यभावित्वमिति शङ्का नैव युक्ता स्वकल्पितस्वरूपतटस्थलक्षणभेदरक्षणाय श्रुत्यन्यथानयनात्स्वकल्पितप्रक्रियात्यागस्यैव ज्यायस्त्वात् । सर्वदृक्सदा' इति कारणत्वव्यप्यसार्वज्ञ्यस्य सार्वदिकत्वोक्त्या कारणत्वेपि तदवच्छम्भावेन उपलक्षणत्वस्य दुरुपगमत्वाच्च । सर्वविषयकत्वोपलक्षितदृग्रूपत्वमेव सर्वदृक्त्वमिति तस्य सार्वदिकत्वेपि न सार्वज्ञ्यस्य तादृशत्वमिति तु रिक्त वच तस्य केवलदृग्रूपत्वातिरेकेण द्वकपदमात्रलभ्यतया सर्वपदवैयर्थ्यप्रसङ्गेन श्रुतितात्पर्याविषयत्वात् ॥

चन्द्रिका

नापि लक्ष्यान्तर्गतानन्तर्गते स्वरूपतटस्थे, अन्तर्गतपदेन लक्ष्यैक देशोक्तौ लक्ष्यस्याखण्डत्वहाने । अभेदोक्तौ तु मकुष्टप्रकाशत्वादे-

प्रकाश

निवृत्तेस्सर्वदु खानामीशान प्रभुरव्यय ।

इत्यादिमन्त्रस्योक्ततयाऽव्ययपदेन कारणत्वानपगमस्योक्ते, "निवृत्ते-स्सर्वदु खाना" इत्यस्यान्वयाय 'कारण' इति पदस्यावश्यमध्याहार्य-त्वात्, प्रभुपदस्य वा कारणार्थत्वादिति भाव । उक्त च भग-वत्पादै —"सर्वदु खाना निवृत्ते कारणभूतस्तुरीयो देव" इति । तथा च सर्वदु खाना निवृत्ते कारण, 'ईशाना' मुक्ताना 'अन' चेष्टक, अनिते पचाद्यच् । 'अद्वैत' द्वैतशब्दितमिथ्याज्ञाननि वर्तक । 'सर्वभावाना' सर्वजीवाना 'देव' प्राप्य, गत्यर्थत्वा द्दिव इति मन्त्रपदानामर्थो ध्येय । ब्रह्मत्वेन पराङ्गीकृततुरीय-परत्वप्रदर्शनाय "अद्वैत" इत्यादिविशेषोक्ति । "तुरीय तत्सर्वदृक् सदा" इति कारणत्वाविनाभूतसार्वज्ञ्यस्य तटस्थेनाङ्गीकृतस्य सदातनत्वोक्तिरिति भाव । न चाव्ययत्व सदातनत्व च स्वरू-पापेक्षयेति वाच्य, स्वरूपतथात्वस्य धर्मिग्राहकादिमानसिद्धत्वेन त-दुक्तेर्वैयर्थ्यात् । श्रुतधर्मविशिष्टत्वेन तथात्वस्य सम्भवे तत्यागे हे-त्वभावाच्च । पञ्चम निराह—नापीति । आनन्दकारणत्वयो स्व-रूपान्तर्गतानन्तर्गतत्वात्स्वरूपतटस्थत्वे युक्ते इति भाव । अन्तर्ग-तपदार्थं द्वेधा विकल्प्य क्रमेण निराह—अन्तर्गतेति ।

चन्द्रिका

श्चन्द्रस्वरूपलक्षणत्वेन स्वीकृतस्यापि तन्न स्यात् * । तथा लक्षणवाक्यस्याखण्डार्थत्वाय † प्रकृष्टत्वादेश्चन्द्रप्रातिपदिकार्थात् बहिर्भावस्योक्तत्वात् । प्रसिद्धस्यासाधारणधर्मस्य लक्षणत्वेनाप्रसिद्धस्य ‡ धर्मिणश्च

प्रकाश

'तन्न स्यात्' स्वरूपलक्षणत्वं न स्यादित्यर्थः । स्वरूपत्वे लक्षणत्वमेवायुक्तमित्याह—प्रसिद्धस्येति ।

---

* ननु प्रकृष्टप्रकाशत्वपदेन प्रकाशत्वसमानाधिकरणैतज्ज्योतिर्मण्डलान्तर्गततेजोवधिकापकर्षशून्यत्वस्य विवक्षितत्वादभावस्य चाधिकरणस्वरूपत्वेन चन्द्राभिन्नस्य तस्य चन्द्रस्वरूपलक्षणत्वे नानुपपत्तिरिति चेन्न, तथा सति जगत्कारणपदेनापि जगन्नियतपूर्ववृत्तित्वसमानाधिकरणान्यथासिद्धिविरहस्यैव विवक्षितुं शक्यत्वेन अभावरूपत्वेन लक्ष्याभिन्नस्य कारणत्वस्य स्वरूपलक्षणत्वानङ्गीकारस्यायुक्तत्वापत्तेः ॥

† 'अखण्डार्थत्वाय' एकप्रातिपदिकार्थमात्रनिष्ठत्वरूपाखण्डार्थत्वनिरुक्त्युपपादनायेत्यर्थः । तेन प्रकृष्टत्वादिससर्गस्य लक्षणवाक्यजन्यबोधे भानाभानमात्रेण पदान्तरार्थसंसर्गागोचरप्रमितिजनकत्वरूपाखण्डार्थत्वस्य 'प्रकृष्टप्रकाशश्चन्द्र' इति वाक्ये निर्बाधतया न तदर्थं प्रकृष्टत्वादेश्चन्द्रप्रातिपदिकार्थबहिर्भाव आवश्यक इति शङ्काया अनवकाशः । "यद्वा तत्प्रातिपदिकार्थता" इति प्राचीनोक्तनिरुक्त्यन्तरानुरोधायावश्यकत्वात् ॥

‡ अत्र प्रसिद्धाप्रसिद्धपदाभ्यामनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयविषयाविषयौ विवक्षितौ । अतो लक्षणधर्मिणो ब्रह्मण श्रुतिप्रसिद्धत्वेन कथमप्रसिद्धत्वमिति शङ्कानवकाशः, सगुणत्वनिर्गुणत्वादिविप्रतिपत्तिकालीनब्रह्मज्ञानस्यातादृशत्वात् ॥

चन्द्रिका

लक्ष्यतया, लक्षणस्य लक्ष्यमात्रत्वानुपपत्तेश्च *। कारणत्वे लक्ष्यमात्रत्वरूपस्वरूपलक्षणत्वस्य † ममाप्यनभिलषितत्वाच्च। आनन्दत्वादेरपि धर्मत्वाच्च। आनन्दो लक्षणमिति चेन्,

प्रकाश

सिद्धान्ते तु सविशेषत्वेन न लक्ष्यमात्रत्वमिति भावेनाह—कारणत्व इति। आनन्दत्वादेरिति। तथा च तस्यापि ताटस्थ्यं स्यादिति भाव।

---

* 'लक्षणस्य' सत्यज्ञानादिपदार्थस्य, 'लक्ष्यमात्रत्वानुपपत्ते' लक्ष्यात्यन्ताभिन्नत्वायोगात्। उक्तमसिद्धयसिद्धयोर्विरुद्धतया तदाश्रययोर्लक्षणलक्ष्ययोरत्यन्ताभेदायोगेनासमवादिति भाव। एतेन लक्ष्यान्तर्गतपदेन उपहितकेवलात्मना लक्ष्यात्यन्ताभिन्नत्वविवक्षणाच्च दोष इति निरस्तम्, प्रागुपदर्शितरीत्या अभावरूपे कारणत्वे तिव्याप्तितादवस्थ्याच्च। 'उपहितात्मना' इत्यस्य प्रयोजनाभावाच्च। किंचाभेदविशेषणमात्यन्तिकत्व यदि तात्त्विकभेदासामानाधिकरण्य, तर्हि त्वया क्वापि तात्त्विकभेदस्यानुपगमाद्व्यावर्तकम्। यदि चाविधिकभेदासामानाधिकरण्यरूप, तर्हि स्वेनैवाविधिकभेदेनानन्दादीनां धर्मधर्मिभावोपपादनपूर्वक लक्षणत्वव्यवस्थापनविरोध इत्यलम्॥

† 'लक्ष्यमात्रत्वरूपस्वरूपलक्षणत्वस्य' लक्ष्यात्यन्ताभिन्नत्वरूपस्वरूपलक्षणत्वस्य। लक्ष्यात्यन्ताभिन्नत्व च स्वातिरिक्तलक्ष्यप्रतियोगिकासमानाधिकरणलक्ष्याभेदाश्रयत्वरूपमद्वैतिसम्मतम्। एतादृशलक्ष्यमात्रत्वस्य चाद्वैतिमत इवास्मन्मतेऽपि कारणत्वे नाङ्गीकार, अस्मदुपगतस्य ब्रह्मभेदप्रतिनिधिर्विशेषस्यापि स्वातिरिक्तलक्ष्यप्रतियोगिकत्वेन तदसामानाधिकरण्यस्य कारणत्वनिष्ठब्रह्माभेदे सविशेषाभेदवादिभिर्दुरुपगमत्वादिति बोध्यम्॥

चन्द्रिका

तर्हि जगत्कारणं लक्षणमस्तु * । कारणस्य सोपाधिकत्वेन निरुपा-धिकस्वरूपत्वाभावे आनन्दस्यापि तन्न स्यात्, तन्मते शुद्धे आनन्दत्वजातेरभावेनानुकूलवेदनरूपस्य वा परमप्रेमास्पदस्य वा दुःखविरोधोपलक्षितस्वरूपस्य वा तस्य सोपाधिकत्वात् ।

प्रकाश

तर्हीति । नन्वानन्दस्य धर्मतया लक्षणत्वं युक्तं, न तु कारणस्य, धर्मित्वादिति चेन्न आनन्दस्य लक्ष्याभेदे धर्मत्वाभावात्, कार णस्य शक्तिरूपतया धर्मत्वाच्चेति भाव । सोपाधिकत्वेनेति । अनन्यथासिद्धत्वादिघटितरूपत्वाच्छक्तेरपि विषयनिरूप्यत्वाच्चेत्यर्थ । 'शुद्धे' इति जात्यभावे हेतुगर्भम् । 'तस्य' आनन्दस्येत्यर्थ ।

---

* न च जगत्कारणं ब्रह्मलक्षणमित्येतदिष्टमेव, जगत्कारणभूतानां त्रि-शिष्टब्रह्मात्मकब्रह्मविष्णुरुद्ररूपशक्तीनां उपहितब्रह्माभिन्नानां शुद्धस्वरूपलक्षणत्वे बाधकाभावात् । जगत्कारणत्वं तु तटस्थमत्र, तस्योक्तशक्तिधर्मत्वेन स्वरूपैक्याभावादिति वाच्यम्, "शक्तय परमात्मन इत्यादिभिश्शक्तीनां शिवसम्बन्धि-त्वाभिधायिभिर्विरोधेन, विशिष्टशुद्धयोर्भेदासम्भवेन च शक्तीनां शुद्धात्यन्ताभि-न्नत्वरूपशुद्धस्वरूपलक्षणत्वस्यानुपपत्ते । शुद्धसम्बन्ध्युपहितरूपाभिन्नत्वात्तदुपपत्ति-रिति चेत्तदीयशक्तिरूपविशिष्टस्वरूपाभिन्नस्य कारणत्वस्य कुतो न स्वरूपल-क्षणत्वम्, शुद्धस्वरूपैक्याभावस्योभयत्र तौल्यादिति दिक् ॥

